## काञ्चीपुराधीशैः जगद्गुरु श्री शङ्कराचार्य स्वामिपादैः प्रेषितः शुभसन्देशः



"श्री चन्द्रमौलीश्वराय नमः"

श्री शङ्कर-भगवत्पादाचार्य-परम्परागत-

**श्री काञ्चि कामकोटि पीठाधिपति-**

**जगद्गुरु श्री शङ्कराचार्य स्वामिनः**

**श्रीमठसंस्थानम् काञ्चीपुरम्-६३१५०२**

श्रीः

**'चन्दमामा'** (संस्कृत) प्रकाशकस्य श्री. बि. विश्वनाथरेड्डि महाशयस्य सकुटुम्बस्य सर्वाभीष्टसिद्धये क्रियते नारायणस्मृतिः ।

प्रहिता संस्कृतभाषायां प्रकाश्यमाना 'चन्दमामा' पत्रिका दृष्टा । भारतीयभाषाभिः प्रायेण सर्वाभिः चिरात् प्रचारं नीयमाना बालानां मनोविनोदन-विषयविज्ञानादिहेतुः "चन्दमामा" नाम मासिकी पत्रिका वर्वर्तीति निश्चप्रचम् ।

अमर्त्यवाणी कालेन अमर्त्यैकसाधारणीं दशां गमिता दिष्ट्या मर्त्येष्वपि प्रचारापादनाय काले दत्तावलम्बा प्रयत्नैरीदृशैः त्रैलोक्यसाधारणीं स्वां शाश्वतीं समृद्धिं प्राप्स्यतीति विश्वसिमः ।

संस्कृतभाषामयी चन्दमामापत्रिका प्राकाश्यं नीयमाना शाश्वतीव पूर्णचन्द्रिका सम्पादकसमित्याः संस्कृतभाषाप्रणयिनां च सर्वेषां मनोरथं पूरयतु भगवतो महात्रिपुरसुन्दरीसमेतस्य श्रीचन्द्रमौलीश्वरस्य कृपयेत्याशास्महे ।

नारायणस्मृतिः



श्रीमता डा करणसिंह महोदयेन प्रेषितः सन्देशः

Phone : 616067

# Virat Hindu Samaj

Ramayan Vidyapeeth, 15, Institutional Area, Lodhi Road, New Delhi-110003.

Founder President
Dr. Karan Singh
M.P.

Dated 23.3.1984

My dear Shri Reddi,

Many thanks for your letter of 13 March sending me a set of the March issues of Chandamama in various languages. I must congratulate you for this excellent venture, particularly for your decision to bring out an edition in Sanskrit. Sanskrit has played a fundamental role in moulding our culture down through the millenia and I warmly commend your initiative in this matter.

With good wishes,

Yours sincerely,

Karan Singh

Shri B. Viswanatha Reddi
Chandamama Publications
Vadapalani
Madras 600026



# चन्दमामा

मे १९८४

*

अन्तरङ्गम्


| | | | | | |
|---|---|---|---|---|---|
| चन्दमामा प्रजल्पति | ... | ७ | विश्वासार्हः | ... | ३९ |
| परोपकारी | ... | ८ | सुकुमारी | ... | ४३ |
| त्रयः मान्त्रिकाः | ... | ११ | दानरहस्यम् | ... | ४६ |
| मनुष्यः शुकः च | ... | १९ | यथा तथा | ... | ४९ |
| मूर्खग्रामः | ... | २७ | विष्णुकथा | ... | ५१ |
| ज्ञानोदयः | ... | ३२ | प्रतीकारः | ... | ५९ |
| आंग्ल शासनस्य आरम्भः | ... | ३५ | चित्रशीर्षिकास्पर्धा | ... | ६४ |


*


प्रतिकृति-मूल्यम्-रू २-००

वार्षिकं ग्राहक-शुल्कम्-रू २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'

सञ्चालकः 'नागिरेड्डी'

---

अत्र भाषा यावच्छक्यं सरला भवतु इति अस्माकं प्रयत्नः । एतद्विषये पूर्वस्मिन् अङ्के किञ्चित् उक्तम् । तथा एव अस्माभिः अनुसृताः अन्ये च केचन अंशाः - क्रियापदस्य भूतकालार्थे कृदन्तरूपम् , परिमितानां शब्दानाम् उपयोगः, क्रियापदानां विभज्य प्रयोगः यथा ''प्रयते-प्रयत्नं करोमि'', अधिकतया परस्मैपदिनः, अकारान्ताः शब्दाः, कर्तरि प्रयोगः च ।

प्रथमे अङ्के केचन दोषाः आसन् । इतःपरं परिष्कर्तुं विशेष-अवधानं दद्मः ।

---

सम्पुटः—१ मे १९८४ सञ्चिका—२

प्रतिकृति-मूल्यम् रू. २.००

वार्षिकं ग्राहक-शुल्कम् रू. २४-००



## चन्दमामा प्रजल्पति



## डयमानाः पशवः

कोटिवर्षेभ्य पूर्वं भूमण्डले विचित्राः पशवः आसन् । ते पशवः पक्षाभ्यां डयमानाः वायौ सञ्चरन्ति स्म। एतेषां पक्षयोः दीर्घता षोडश मीटर परिमिता । लक्षवर्षपर्यन्तम् एते जीवन्ति स्म। एषः अश्रुतपूर्वः विषयः पूर्वं टेक्सास् शिलावशेषतः ज्ञातः ।

## व्योमनौकया नभोमण्डलविहारः



अमेरिका देशस्य 'नासा'संस्थायाः विज्ञानिनः व्योमनौकायाः निर्माणं कुर्वन्तः सन्ति। एषा नौका ७४ जनान् 'व्योमावरणं' नेतुं शक्नोति। प्रथमगणः १९९० क्रिस्ताब्दानन्तरं एतया नौकया नभोमण्डले विहरिष्यति इति विज्ञानिनाम् सङ्कल्पः। व्योमनौकया विहारार्थं एकैकस्य व्ययः केवलं विंशति-लक्ष-डालर् !

## दर्पणसदृशं सुवर्णम्



न्यू मेक्सिको देशे लास् अलमस्नामके राष्ट्रिय-प्रयोगालये विज्ञानिनः सुवर्णं तथा सूक्ष्मीकृतवन्तः, यथा परस्तात् स्थितानि अपि वस्तूनि तद्द्वारा द्रष्टुं शक्नुमः। तस्य सुवर्णस्य सूक्ष्मता १/१०लक्षाङ्गुलमिता अस्ति ।

## भवन्तः जानन्ति वा ?

१. कलकत्तानगरं कदा कः निर्मितवान् ?
२. क्रैस्तमत-जिज्ञासुः मोगल-चक्रवर्ती कः ?
३. अलेग्जाण्डरमहाशयस्य भारताक्रमण-यात्रां कः लिखितवान् ?
४. नवदश-शतके भारतदेशस्य किञ्चन भूभागस्य आक्रमणं विदेशीयः कः राजा कृतवान् ?
५. भारतदेशे आंग्लविद्यायाः अध्यापनस्य आरम्भं कः कृतवान् ?

(उत्तराणि ६४तमे पृष्ठे)



# परोपकारी

नारायणकूटं नाम ग्रामः । तत्र रमणः नाम परोपकारी वसति स्म । एकदा महत्या वृष्ट्या चण्डमारुतेन च वृक्षाः पतिताः, गृहाणि शिथिलानि जातानि । बहवः निर्गतिकाः अभवन् । रमणः गृहं गृहम् अटित्वा धनं सङ्गृहीतवान्। निर्गतिकानां कृते तेन धनेन कुटीरान् निर्माप्य दत्तवान् । एतत्-पुण्यकार्यार्थं ग्रामीणाः सर्वे धनं दत्तवन्तः । किन्तु धनगुप्तः नाम धनिकः एकं नाणकम् अपि न दत्तवान् ।

अधिकदानं ये कृतवन्तः तेषां नामानि रमणः सर्वत्र उद्घोषयति स्म । धनगुप्तः रमणम् आहूय भर्त्सयित्वा उक्तवान्– 'भोः! महोपकारिन्, किमर्थं दातॄणां नामानि सदा रटति? । येषां गृहं धनं च नष्टं तेषु कश्चित् अपि भिक्षां न याचितवान् । अत्र रहस्यं किं भवान् जानाति? शृणोतु ! भिक्षां याचितुम् अस्मिन् ग्रामे कोऽपि न इच्छति । भवादृशाः एव परोपकारव्याजेन धनसङ्ग्रहं कुर्वन्ति । सङ्गृहीते धने किञ्चन अंशं भवान् गिलति इत्यपि अहं ज्ञातवान् । अतः भवादृशस्य वञ्चकस्य कृते अहं सहकारं कर्तुं न सिद्धः ।'

ग्रामे सर्वे रमणं प्रशसन्ति स्म । तथापि तस्य न तृप्तिः । धनगुप्तः अपमानं कृतवान् । अतः यथाकथञ्चित् प्रतीकारः करणीयः एव इति तस्य सङ्कल्पः ।

एकदा रमणः धनगुप्तस्य गृहं गत्वा उक्तवान् "भवान् मां वञ्चकं मन्यते । किन्तु ग्रामीणाः सर्वे मां प्रशंसन्ति । ग्रामे सामान्यजनाः अपि कुटीरनिर्माणार्थं धनं दत्तवन्तः । भवान् एकः एव एकं नाणकम् अपि न दत्तवान् ।"



उक्तवान् – वत्स! धनगुप्तः सदा बहुगर्व्यं वदति, अन्यान् निन्दति च। सार्वजनिककार्यार्थं प्रवृत्ताः प्रशंसया सन्तुष्टाः, निन्दया खिन्नाः च न भवन्ति। अतः धनगुप्तस्य विषये मा चिन्तयतु।

पितुः उपदेशेन रमणस्य कोपः न शान्तः। सः मित्राणां समीपे स्वीयम् अपमानं निवेदितवान्। ते अपि उक्तवन्तः–'धनगुप्तस्य वचनमात्रेण भवान् वञ्चकः मूर्खः वा न भवति। तादृशानि वचनानि श्रवणसमनन्तरम् एव विस्मरणीयानि'' इति।

रमणसकाशतः उपकृताः अपि तं प्रति एवम् उक्तवन्तः– ''भवान् देवसदृशः मानवः। अतः एव भर्त्सनानि श्रुत्वा अपि अस्माकं कृते उपकारं करोति'' इति। एवं सर्वे रमणं प्रशंसितवन्तः एव, न तु धनगुप्तस्य प्रवृत्तिं खण्डितवन्तः।

धनगुप्तः कोपेन रमणं प्रति उक्तवान्– 'ऋणार्थं बहवः जनाः अत्र आगच्छन्ति। मम सकाशतः ऋणं स्वीकृत्य मम प्रशंसां कृत्वा ते गच्छन्ति। मयि यावत्कालं धनं भवति तावत्कालं जनाः प्रशंसन्ति एव। भवादृशाः निर्गतिकाः धनिकैः दत्तं धनं सङ्गृह्य दरिद्राणां कृते दत्वा 'महान् परोपकारी' इति कीर्तिं सम्पादयन्ति। मादृशस्य धनिकस्य कृते एतादृशी कीर्तिः मास्तु'। इति अवमानं कृत्वा रमणं प्रेषितवान्।

रमणः अतीव कुपितः दुःखितः च अभवत्। प्रवृत्तं सर्वं वृत्तान्तं श्रुत्वा रमणस्य पिता

केचित् ग्रामवृद्धाः रमणस्य धनगुप्तस्य च मध्ये प्रवृत्तं वृत्तान्तं श्रुतवन्तः। ते ग्रामवेदिकायां रमणम् आहूय उपदिष्टवन्तः–''वत्स! धनगुप्तः वाचाटः, सदा कुत्सितानि वचनानि एव रटति। एतदर्थं भवान् मा चिन्तयतु। यदि शुनकः भषति, तेन लोकस्य को वा लाभः? का वा हानिः?

सर्वेषां समानाभिप्रायं ज्ञात्वा धनगुप्तस्य विषये रमणः स्वयं चिन्तितवान्– 'धनगुप्तः महान् धनिकः। ग्रामीणानां तेन सह सम्बन्धः अस्ति एव। अतः एव तस्मै उपदेशं कर्तुं सर्वे भीताः। किन्तु धनगुप्तस्य विषये प्रतीकारः करणीयः एव' इति।

एकदा सुदूरतः ग्रामतः कश्चित् मल्लः परोपकारिणः रमणस्य गृहम् आगतवान्, उक्तवान् च–"अहं मल्लविद्यानिपुणः। एतस्मिन् ग्रामे मल्लविद्यां प्रदर्श्य ग्रामीणान् सन्तोषयामि। ग्रामीणाः आहत्य शतं दीनारान् ददतु, तेन बहु सन्तुष्टः भविष्यामि। कृपया एतदर्थं साहाय्यं करोतु।"

'धनगुप्तस्य कृते प्रतीकारं कर्तुम् एषः एव समुचितः समयः' इति रमणः चिन्तितवान्। मल्लं प्रति उक्तवान् च– "एतस्मिन् ग्रामे धनगुप्तः नाम महान् धनिकः अस्ति। सः मल्लविद्यां बहु आद्रियते। तस्य समीपं गत्वा प्रार्थनां करोतु। सः अवश्यं साहाय्यं करिष्यति एव"।

मल्लः धनगुप्तस्य गृहं गत्वा धनगुप्तं प्रार्थितवान्–"गुप्तमहाशय! अहं मल्लः। मल्लविद्यायां भवतः अतीव आदरः इति श्रुतवान्। मम मल्लविद्याप्रदर्शनार्थं कृपया व्यवस्थां करोतु। पारितोषिकरूपेण शतं दीनाराः यदि दीयन्ते अहं बहु सन्तुष्टः भवामि" इति।



मल्लस्य वचनं श्रुत्वा क्रुद्धः धनगुप्तः मल्लं तिरस्कुर्वन् उक्तवान्– 'भोः! स्वशरीरं केवलं स्थूलीकुर्वन् चत्वरवृषभः इव अटति! किं लज्जा न भवति? भवादृशान् दृष्ट्वा मम मनः जुगुप्सितं भवति। परस्परकुट्टनं विना मल्लविद्यायां किम् अस्ति? यथा आगतः तथा एव प्रतिगच्छतु' इति।

एवं धनगुप्तेन अपमानितः मल्लः क्रोधेन दन्तान् निष्पीडयन् रमणस्य गृहम् आगत्य उक्तवान्– 'भोः! किमर्थं असत्यं वदति? धनगुप्तः मल्लविद्यां तिरस्करोति। सः मम अपमानं कृतवान्। भवतः कारणात् इदंप्रथमतया अहम् अपमानम् अनुभूतवान्''।

''महाशय! धनगुप्तः भवन्तं यदा तिरस्कृतवान् भर्त्सितवान् च, तदा भवान् किं तूष्णीं स्थितवान्? अये! मूढ! भवतः मल्लविद्या तस्मिन् किञ्चित् प्रदर्शनीया आसीत्। इदानीम् अपि कालः न अतिक्रान्तः'', इति रमणः सपरिहासम् उक्तवान्।

सत्यं! मल्लविद्याम् इदानीम् एव प्रदर्शयामि इति उक्त्वा मल्लः पञ्चषैः प्रहारैः कुट्टितवान्। प्रहारवेदनया रुदन् रमणः उक्तवान्– ''दुष्टः धनगुप्तः भवन्तम् अपमानितवान्। किन्तु भवान् मां प्रहृतवान्। किम् एतत् न्याय्यम्''?

''भवतः धनगुप्तस्य च मध्ये विद्वेषः स्यात्। अतः एव धनगुप्तं क्रुद्धयितुं भवान् मां प्रोत्साहयति। मम अपमानस्य भवान् एव कारणम्। अतः भवन्तम् एव कुट्टितवान्'' इति उक्त्वा मल्लः निर्गतवान्।

प्रवृत्तं सर्वं वृत्तान्तं रमणस्य पिता ज्ञातवान्। सः रमणम् आहूय:- ''वत्स! धनगुप्तः दुष्टः। धनगुप्तेन सह व्यवहारः मास्तु। परोपकारार्थं प्रवृत्ताः मानापमानयोः तुल्याः भवन्ति। अतः कर्तव्यबुद्ध्या कार्ये प्रवृत्तः भवतु'' इति उपदिष्टवान्।

एवं पित्रा उपदिष्टः रमणः ततः परं मनसा अपि धनगुप्तं न स्मृतवान्॥






[मल्लूककेतुः पिशाचगणस्य नायकः भवितुम् न अङ्गीकृतवान् । अनन्योपायः पद्मपादः स्वप्रदेशं गतवान्। तेन सह पिङ्गलः अपि गतवान् । पिङ्गलः पद्मपादस्य गृहे एकसप्ताहम् अतिथिः आसीत् । अनन्तरं सः मल्लूककेतुम् आरुह्य स्वगृहं प्राप्तवान् । 'अपेक्षिते समये आगच्छामि' इति उक्त्वा मल्लूककेतुः अदृश्यतां गतः। पिङ्गलः दीनां स्वमातरं दृष्टवान्।]

स्वमातुः दीनावस्थां कृशशरीरं च दृष्ट्वा पिङ्गलः निर्विण्णः। कम्पमानेन स्वरेण आह्वयन्तं पुत्रं दृष्ट्वा माता चकिता ! रुदती सा — 'पुत्र! इदानीम् आगतः वा? भवन्तम् अदृष्ट्वा बहु कालः अतीतः' इति वदन्ती पुत्रम् आलिङ्गितवती ।

तां सान्त्वयन् पिङ्गलःउक्तवान्–"अम्ब ! भवत्याः परिस्थितिः कथम् एवं शोचनीया अभवत् ? प्रयाणतः पूर्वं अहं सहस्रं दीनारान् दत्तवान् किल ? तत् किं अभवत् ? किं चौर्यं अभवत् ? इदानीं भवत्याः योग-क्षेमस्य का व्यवस्था ? अग्रजद्वयं कुत्र ? " इति।

शोकतप्ता माता शीघ्रं उत्तरं दातुं न शक्तवती । अश्रुमार्जनं कुर्वती सा— "भवतः अग्रजकारणतः एव मम एषा दुरवस्था, पुत्र !



भवतः गमनानन्तरं तौ मां पीडयित्वा ताडयित्वा सहस्रदीनारान् अपि वशीकृतवन्तौ। गृहतः निर्गतौ तौ इदानीम् अपि न आगतवन्तौ। तौ कुत्र गतवन्तौ इत्यपि अहं न जानामि '' इति उक्तवती।

''जन्मदात्रीं मातरम् एव अग्रजौ पीडितवन्तौ'' इति ज्ञात्वा सः दुःखितः। पिङ्गलः चिन्तयति— ''एकस्याः एव मातुः उदरे जातानां सहोदराणाम् एतादृशाः दुष्टगुणाः कथम्? यत्किमपि भवतु। अहम् अग्रजयोः विषये प्रतीकारं न साधयामि'' इति।

पिङ्गलः कृशशरीरां स्वमातरं गृहस्य अन्तः नीत्वा उक्तवान्— ''अम्ब! इतःपरं भवत्याः कृते दुःखस्य अवकाशः एव नास्ति। भाग्यवशतः अहं सर्वासु अपि कठिपरीक्षासु उत्तीर्य विपुलधनेन सह आगतवान् अस्मि। अद्य आरभ्य कष्टानि सर्वाणि समाप्तानि इत्येव चिन्तयतु'' इति। अनन्तरं सः स्वेन सह आनीतं धनकनकादिकं मातुः कृते प्रदर्शितवान्। राशिरूपेण स्थितं तत्सर्वं एकस्यां गोण्यां सुरक्षितं स्थापितवान्।

पिङ्गलस्य माता अतीव सन्तुष्टा। गोण्यां स्थितानि वस्तूनि हस्तद्वयेन पुनः पुनः स्पृशन्ती सा उक्तवती—'' पुत्रक! भवान् अदृष्टशाली। अतः एव कष्टशतेषु अपि जितवान्। इदानीं मम तु अतीव बुभुक्षा। भवतः अपि बुभुक्षा अस्ति एव। अतः प्रथमं नगरं गत्वा भोजनार्थं किमपि आनयतु। रोटिकाः फलानि वा शीघ्रम् आनयतु। अनन्तरम् उपविश्य वार्तालापं कुर्मः'' इति।

तदा पिङ्गलः स्वकीयं मन्त्रस्यूतं तस्याः कृते प्रदर्शितवान्, उक्तवान् च—''अम्ब! भवती भक्ष्यभोज्यं यद् यद् इच्छति, तत्सर्वं स्मरतु, एकक्षणे एव सर्वम् अपि आनयामि'' इति।



'पुत्रक! कोऽयं परिहासः? इदानीम् अपि भवतः बालभावः न दूरङ्गतः। बुभुक्षया प्राणाः एव निर्गच्छन्तः सन्ति। भवान् तु भक्ष्य-भोज्यम् इति किमपि जल्पति। परिहासः मास्तु। शीघ्रं गत्वा काश्चन रोटिकाः आनयतु' इति माता उक्तवती।

पिङ्गलः मातृसमीपे एव उपविश्य मन्त्रं पठन् स्यूते हस्तं प्रसार्य नवनवीनरोटिकाः बहिः आनीतवान्। एतत् दृष्ट्वा माता आश्चर्य-चकिता। पिङ्गलः तु पुनरपि स्यूते हस्तं प्रसार्य भक्ष्य-भोज्यादिकं व्यञ्जन–पायसादिकं बहिः आनीय पात्रस्य उपरि राशीकृतवान्। सुगन्ध-सहिताः भोजनपदार्थाः !

माता आश्चर्येण एतत्सर्वं पश्यन्ती उक्तवती- 'किमेतत् पुत्र? मन्त्रः वा? मायाजालं वा? अथवा अहं स्वप्नं पश्यन्ती अस्मि वा ? अहं किमपि ज्ञातुं न शक्नोमि। अल्पे स्यूते एतत्सर्वं कथं स्थापितम् ?' इति।

पिङ्गलः मन्त्रस्यूतं पुटीकृत्य स्वसमीपे स्थापितवान्। एकैकशः खाद्यं स्वयं खादन्, मातुः मुखे अपि स्थापयन् उक्तवान्– 'अम्ब! विवरणं अनन्तरं वदामि। यदि उदरं पूर्णं भवति, जिह्वा रुचिं जानाति, तर्हि एषः स्वप्नः न इति भवती स्वयम् एव जानाति। अस्तु, प्रथमं भोजन करोतु' इति।

अनन्तरं पिङ्गलेन सह तस्य माता अपि आतृप्ति भोजनं कृतवती। पिङ्गलः रिक्त-स्थालिकाः स्यूते स्थापयित्वा अदृश्यीकृत्य तं स्यूतं मातुःकृते दत्तवान्।'अम्ब ! स्यूतं भवत्याः कृते इत्येव आनीतवान्। अद्य आरभ्य भवत्याः पाककार्यं नास्ति। स्यूते अद्भुता शक्तिः अस्ति। एतस्य प्रभावेण अभिलषितानि वस्तूनि लभ्यन्ते। तदर्थम् एकः मन्त्रः अस्ति' इति वदन् पिङ्गलः मातुः कर्णे मन्त्रं उपदिश्य उक्तवान्– 'एतं मन्त्रं रहस्यं गोपयतु' इति। वृद्धा सा माता भयभक्त्या तं स्यूतं स्वीकृतवती।

एवं माता पुत्रेण सह सन्तोषेण सम्भाषणं करोति स्म। तदा मुखद्वारे द्वयोः सम्भाषणं, उच्च-स्वरेण रोदनं च श्रुतम्।

पिङ्गलः विषयं ज्ञातुं इच्छन् त्वरया द्वारम् उद्घाट्य दृष्टवान् । तत्र अग्रजद्वयं— जीवदत्तः लक्षदत्तः च- परस्परम् आलिङ्ग्य रोदनं करोति स्म । तयोः वस्त्राणि मलिनानि । केशाः अस्त-व्यस्ताः ।

अतिदीनावस्थायां स्थितं अग्रजद्वयं दृष्ट्वा पिङ्गलस्य कोपः समग्रः शान्तः । तत्स्थाने महा-दरप्रीतिः उत्पन्ना । अग्रजयोः कष्टं किं स्यात्? इति सः चिन्तितवान् । अतः पिङ्गलः अग्र-जयोः समीपं गत्वा उक्तवान् "दुःखं मास्तु । भाग्यवशतः अहं धनं सम्पाद्य गृहम् आगतवान् अस्मि । कष्टं सर्वं समाप्तम् । इतःपरं सुख-मयानि दिनानि । प्रवृत्तं सर्वं माता उक्तवती । यत् प्रवृत्तं तत् गतम् एव । इदानीम् अन्तः आगच्छन्तु" इति ।

पिङ्गलस्य वचनं श्रुत्वा जीवदत्तः लक्षदत्तस्य मुखं साकूतं दृष्टवान् । अनन्तरं जीवदत्तः रुदन् कम्पमानस्वरेण उक्तवान्- 'सहोदर ! भवान् आगतवान् । एतत् युक्तम् एव । वयं तु महा पापिनः । जन्मदात्र्याः मातुः विषये एव अस्मा-भिः कीदृशः अपराधः कृतः इति भवता ज्ञातम् एव स्यात् । इतःपरं केन वा मुखेन वयम् एतत् गृहं प्रविशामः ? भवतः आगमनस्य प्रतीक्षायां वयम् आस्म । इतःपरम् अस्माकं शुकसरोवरः एव शरणम् । तत्र मरणं प्राप्यते चेत् एव अस्माकं पापस्य प्रायश्चित्तं भवेत् । मातुः कृते



नमस्कारान् सूचयतु । भवान् अपि अस्मान् क्षाम्यतु। पश्यतु, इदानीं गच्छामः । इतः परम् अस्माकं मुखदर्शनं न भविष्यति" इति । एवं रुदन्तौ तौ दूरं गतौ एव । पिङ्गलः तयोः अवरोधं कुर्वन् उक्तवान्– "कुत्र गमनम् ? किमर्थं प्राणत्यागेच्छा ?"

उभावपि उन्मत्तौ इव हसितवन्तौ। जीवदत्तः उक्तवान् - "सहोदर ! अस्माकं पापस्य प्रायश्चित्तं भवेत् एव । मातुः कृते वयं बहु कष्टं दत्तवन्तः। महत् पापं कृतवन्तः । इतःपरं अस्माकं शुकसरोवरः एव शरणम् । अवरोधं न करोतु । मातरम् अपि निवेदयतु" इति। एवम् उक्त्वा उभावपि अग्रे गन्तुं प्रवृत्तौ ।

तावति काले माता अपि बहिः आगतवती । पुत्रद्वयं दृष्ट्वा सा करुणया द्रविता । तस्मिन् क्षणे पूर्वं कृतम् अपराधं सर्वम् अपि विस्मृतवती । अनन्यपुत्रप्रेम्णा सा समीपम् आगत्य उक्तवती– "अये ! रोदनं मास्तु, दैवानुग्रहेण भवतोः अनुजः यथेष्टं धनं सम्पाद्य आगतवान् । इतःपरं सुखसन्तोषेण जीवनं यापयामः । आगच्छन्तु, परस्परं सह कुर्वन्तः निश्चिन्ताः एकत्र निवसामः" इति ।

"भवत्याः क्षमादानेन अपि अस्माकं पापं तथैव तिष्ठति किल ? बुद्धिहीनौ किं सामान्यपापम् अनुष्ठितवन्तौ ? अस्य पापस्य प्रायश्चित्तं किम् ? वयं भवत्या सह वासं कर्तुम् अयोग्याः एव" इति उक्तवान् लक्षदत्तः ।





मातरं नमस्कृत्य पिङ्गलं प्रीत्या आलिङ्गितवन्तौ। उक्तवन्तौ च– "इदानीं खादितुं किमपि ददातु। महती बुभुक्षा बाधते । यदा मरण-आलोचनम् आसीत् तदा बुभुक्षायाः स्मरणम् एव न आसीत् । दिनत्रयतः किमपि न खादितम् एव । खादितुं मनः अपि न सिद्धम् आसीत् । इदानीं उभयोः अनुग्रहेण मनुष्यौ सञ्जातौ" इति ।

पिङ्गलः मन्त्रस्यूतं स्वीकृत्य पाकशालां प्रविष्टवान् । मातुः कृते तं स्यूतं दत्वा, अग्रजयोः समीपम् आगत्य उपविष्टवान् । पञ्चनिमेषानन्तरं माता विविध-भोजनपदार्थान् स्थालिकायां स्थापयित्वा पुत्रयोः पुरतः सुव्यवस्थितं स्थापितवती।

पश्चात्तापः सर्वपापानि अपि भस्मीकरोति । इदानीं गृहं प्रविशन्तु । कदाचित् ज्ञानेन अज्ञानेन वा पापं कृतं स्यात्। जन्मदात्री माता अहम् एतत्सर्वं मनसि स्थापयामि वा ? अन्तः आगम्यताम् । यदि अहं माता क्षमां ददामि तर्हि देवः अपि एतद्विषये निरुपायः" इति वदन्ती सा पुत्रयोः हस्तं स्वहस्तेन स्वीकृतवती ।

जीवदत्तः लक्षदत्तः च दुःखं प्रकटयन्तौ अनिच्छया इव गृहं प्रविष्टवन्तौ। माता महता उत्साहेन तयोः कृते स्नानार्थं जलं व्यवस्थापितवती। धारणार्थं पिङ्गलेन आनीतानि महार्घाणि पट्टवस्त्राणि दत्तवती। उभौ अपि आश्चर्येण पश्यन्तौ, स्नानानन्तरं पट्टवस्त्राणि धृतवन्तौ ।

लक्षदत्तेन सह तानि खाद्यानि खादन् जीवदत्तः उक्तवान्- "अम्ब ! भवती यत्किमपि खाद्यं करोतु, तत्सर्वं रुचिकरम् एव भवति । एतावन्ति खाद्यानि किमर्थं कृतवती ? वृथा धनव्ययः" इति ।

तदा पिङ्गलः हसन् उक्तवान्- "इतःपरं प्रतिदिनम् अपि एतादृशभोजनम् । आवश्यकं चेत् नगरीयाणां सर्वेषाम् अपि दरिद्राणां कृते एतादृशं भोजनं दातुं शक्नुमः । खाद्यनिर्माणे मातुः इदानीं सन्तोषः एव, न तु कष्टम् । सद्यः चिन्तां विना यथेष्टं भोजनं कुर्वन्तु " इति ।



पिङ्गलस्य वचनं श्रुत्वा जीवदत्तः लक्षदत्तं संज्ञया किमपि सूचितवान् । लक्षदत्तः विषयं ज्ञातवान् इव शिरः कम्पयन् मौनं भोजनं कर्तुम् आरब्धवान् ।

तद्दिने रात्रौ भोजनानन्तरं "किञ्चित् वायु-सञ्चारं कृत्वा आगच्छावः" इति उक्त्वा जीवदत्तः लक्षदत्तः च बहिः गतवन्तौ ।

पिङ्गलः यथेष्टं धनं सम्पाद्य आगतवान् इति उभौ अपि जानीतः। 'एतस्य वशीकरणं कथम्?' इत्येव तयोः इदानीं चिन्ता। माता तु मध्याह्ने सायम् वा चुल्लीं नं ज्वालितवती एव ! जीवदत्तः पाकशालां प्रविश्य परीक्षां कृतवान् आसीत् । पाकेन विना एव एतावन्ति वस्तूनि कुतः आगच्छन्ति इति सः न ज्ञातवान्। पिङ्गलस्य व्यवहारे उभयोः अपि आशङ्का ।

"पिङ्गलः कथमपि यथेष्टं धनम् आनीतवान्। तत्र संशयः एव नास्ति। तच्च क्रमशः वशीकर्तुं शक्यते । वयं पश्चात्तापदग्धाः इति माता इव पिङ्गलः अपि विश्वसिति । तत् तु तिष्ठतु । मध्याह्ने सायं च भूरि भोजनं कृतम् । पाकशालायां पाकस्य वार्ता अपि नास्ति । एतत् एकं विचित्रम् एव किल ?" इति उक्तवान् जीवदत्तः ।

लक्षदत्तः शिरः कम्पयन् उक्तवान्- 'तन्नाम, पिङ्गलः केनाऽपि मन्त्रेण एतत्सर्वं करोति इति चिन्तयामि। अतः एव नगरीयाणां दरिद्राणाम् अपि समीचीनं भोजनं दातुं शक्यम् इति सधैर्यं वदति । पिङ्गलं पृच्छामः चेत् प्रयोजनं नास्ति । समये मातरम् एव पृच्छामः चेत् रहस्यं ज्ञायते एव" इति ।

अनन्तरदिने कदाचित् पिङ्गलः बहिः गतवान् । तदा तौ दुष्टभ्रातरौ मातुः समीपं गतवन्तौ । वार्तालापसमये भोजनप्रस्तावं कृत्वा 'रहस्य किम् ?' इति पृष्टवन्तौ । माता बहुकालपर्यन्तं पिङ्गलेन अनीतस्य स्यूतस्य विषये किमपि न उक्तवती । किन्तु उभौ अपि सदैन्यं प्रार्थितवन्तौ । तदा 'अन्यान् न वदन्तु' इति वदन्ती माता मन्त्रस्यूतम् आनीय तयोः कृते

प्रदर्शितवती ।

'सः मन्त्रः कः इति वदतु ,अम्ब ! अहम् इदानीम् एव लड्डुकम् इच्छामि। स्वहस्ततः आनयामि' इति उक्तवान् जीवदत्तः ।

माता पुत्रव्यामोहेन वशीकृता पूर्वतनम् अपराधं विस्मृत्य मन्त्रं पाठितवती । जीवदत्तः स्व-हस्ततः एव अपेक्षितानि भक्ष्याणि आनीतवान् । रहस्यं ज्ञातम् इति तदानीं जीवदत्त-लक्षदत्तयोः आनन्दस्य सीमा एव नास्ति ।

तद्दिने रात्रौ एव दुष्टभ्रातरौ स्वकुतन्त्रस्य आरम्भं कृतवन्तौ । यदि पिङ्गलः गृहे न भवति तर्हि माता असहाया भवति इति तौ जानीतः एव । किन्तु 'पिङ्गलः कथं वा दूरीकरणीयः ?' इत्येव तयोः इदानीं समस्या ।

"मम एकः उपायः स्फुरति । परह्यः अहं नगरे एकं नौकानायकं दृष्टवान् । नौकाचालनार्थं तस्य कृते एकः सहायकः युवकः अपेक्षितः । 'यदि आवश्यकं तर्हि, यथेष्टं धनं दत्वा अपि पालकतः युवकं स्वीकर्तुं सिद्धः' इति सः वदति स्म । तेन सह वार्तालापं कुर्मः । उपायेन पिङ्गलं विक्रीणीमः । अस्माकं गृहे आवाम् एव ज्येष्ठौ किल ?" इति उक्तवान् जीवदत्तः ।

'आम्, समीचीनम् आलोचनम् । एवमेव कुर्वः । तं नौकानायकं प्रथमं पश्यावः" इति उक्तवान् लक्षदत्तः ।

उभौ अपि नौकानायकस्य समीपं गतवन्तौ। तौ दृष्ट्वा सः पृष्टवान् 'किं कार्यम् आसीत्' इति ।

"अये, नौकानायकमहोदय! आवयोः पिङ्गलः इति एकः अनुजः अस्ति । सः सर्वथा अविवेकी हठी च । अनपेक्षितं साहसं करोति, बहु व्ययं करोति, सर्वत्र अटति च । एवं स्वमातरं च पीडयन्, तदा तदा पलायनम् अपि करोति। तस्य निर्वहणं कथम् इति एव न ज्ञायते" इति वदन् जीवदत्तः वचनं स्थगितवान् । (अनुवर्तते)






# मनुष्यः शुकः च

वेतालः शवस्य मुखद्वारा पुनः पुनः कथाः कथयति स्म। इदानीं पुनः कथाश्रवणकुतूहलेन इव त्रिविक्रमः पुनः वृक्षस्य समीपं गत्वा तत्र शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौन-मुद्रया श्मशानं प्रति गन्तुम् आरब्धवान्। 'भोः महाराज! अस्मिन् मध्यरात्रसमये मां वहन् भयङ्करं श्मशानं प्रति भवान् गच्छति किल ? भवतः कार्यक्लेशं दृष्ट्वा मम हृदयं द्रवति। गृहीतं कार्यं साधनीयम् इति भवतः आग्रहः श्लाघनीयः एव। किन्तु एतत् सर्वं स्वार्थसाधनाय वा परार्थं वा इति सन्देहः मां बाधते। यदि भवत्सदृशस्य कठोरदीक्षितस्य कस्यचित् कृते एव एषः श्रमः गृहीतः अस्ति तर्हि भवता अतीव जागरूकेण भवितव्यम्। यदा कदाचित् ये साहाय्य स्वीकुर्वन्ति. ते

## वेतालकथा



सम्माननस्य स्थाने अपमानम् अपि कुर्वन्ति । अस्य उदाहरणरूपेण मानवसदृशस्य शुकस्य कथां वदामि । कथाश्रवणेन भवतः गमनक्लेशः न्यूनः भवेत्'- इति कथां वक्तुम् आरब्धवान्।

सुदर्शननामकः कश्चित् धारानगरे वसति स्म। तस्य पत्नी सुन्दरी विनयशीला च । बुद्धिमन्तः पुत्राः च । महती सम्पत्तिरपि आसीत् । तथापि केनचित् अज्ञानकारणेन सः सर्वदा भीतः इव म्लानमुखः दृश्यते स्म । तं सन्तोषयितुं बहवः बहुविधप्रयत्नान् कृतवन्तः । तथापि सः उल्लासं न प्राप्तवान् । अन्ते तस्य ललाटलिखितमेव तथा स्यात् इति सर्वेषां भावना अभवत् ।

एवं सति एकदा एकं पञ्जरं गृहीत्वा कश्चित् मनुष्यः सुदर्शनस्य समीपम् आगतवान् । पञ्जरे मनोहरः एकः शुकः आसीत् । सः मनुष्य सुदर्शन प्रति उक्तवान् – 'स्वामिन्, भवत विषयं श्रुत्वा आगतवान् अस्मि । एषः अपूर्वः वाक्चतुरः शुकः । एतादृशः अन्यत्र कुत्रापि न लभ्यते । एषः रम्याः कथाः वदति, येन भवतः मनः उल्लासं प्राप्नोति । एतस्य मूल्यं सहस्रं दीनाराः।'

सुदर्शनः शुकम् अवलोकितवान्। तस्य मनोहराणि वचनानि श्रुत्वा किञ्चित् किञ्चित् सन्तोषस्य अनुभवः जातः । विक्रयिकस्य वचने कापि अतिशयोक्तिः नास्ति इति ज्ञातम् । तत्क्षणमेव सः सहस्रं दीनारान् दत्वा तं शुकं क्रीतवान् ।

प्रारम्भदिनेषु गृहस्य सर्वेषां जनानाम् अपि शुकस्य विषये प्रीतिः आसीत् । किन्तु सुदर्शनः सर्वदा शुकेन सह एव कालं नयति स्म । एवं सर्वदा शुकध्यानमग्नं तं दृष्ट्वा, अन्येषां शुकस्य उपरि असूया सञ्जाता । सः वाणिज्यव्यवहारादिकं पुत्राणां हस्तेषु निक्षिप्तवान् । एवं च शुकः एव तस्य सर्वस्वं जातम् ।

सर्वदा शुकस्य सहवासः अनुचितः इति यः कोऽपि वदति चेत् तदा ''शुकस्य महत्वं भवान् नैव जानाति । मम हृदयस्य चिन्तां परिहर्तुम् एषः शुकः एव समर्थः । मम हृदयं

कीदृशम् इति एषः एव सम्यक् जानाति'' इति सुदर्शनः उत्तरं वदति स्म ।



तदा सुदर्शनस्य पुत्राः '-सत्यम् । तथापि सम्पूर्णतया रोगनिवारणं करोति चेत्, तर्हि शुकः समर्थः इति वदामः । केवलं चिन्तापरिहारेण किं प्रयोजनम् ? तस्य तादृशी वाक्शक्तिः अस्ति किल ? सम्पूर्णतया निवारणोपायं किमर्थं न वदति ?' इति उक्तवन्तः ।

तदपि सत्यमेव इति चिन्तयन् सुदर्शनः शुकं दृष्ट्वा "चिन्तायाः शाश्वतपरिहारः कोऽपि अस्ति वा ?'' इति पृष्टवान् ।

"ननु भोः, पञ्जरस्थाः स्वतन्त्रजनानां भीतिं परिहर्तुं शक्नुवन्ति इति भवान् भावयति वा? भवतः भयं चिन्तां च परिहर्तुम् उपायं केवलं वक्तुं शक्नोमि । भवतः जीवनं केवलं स्वार्थ–साधनाय मास्तु । परार्थमपि जीवामि इति अभ्यासं करोतु । तदा चिन्ता परिहृता भवति'' इति उक्तवान् शुकः । तदारभ्य सुदर्शनः दरिद्राणां कृते किञ्चित् साहाय्यं कर्तुम् आरब्धवान् । तेन जनानां समूहे तस्य कीर्तिः वर्धते स्म । तेन च तस्य मनसः उत्साहः अपि जायते स्म ।

सः पूर्ववत् सर्वदा शुकेन सह कालक्षेपं त्यक्त्वा, वाणिज्यव्यवहारादिकम् अपि द्रष्टुम् आरब्धवान् । एतस्मिन् विषये गृहस्य जनानां सन्तोषः जातः ।

किन्तु जनकस्य परिमितिरहित–दानधर्मादिकं दृष्ट्वा पुत्राः असन्तुष्टाः जाताः । एकदा ते सुदर्शनं प्रति "तात! लोके शुकः मनुष्यवत् उपदिशति इत्येव नूनं कृत्रिमम् । अतः एषः यः कोऽपि मान्त्रिकः शुकः स्यात् । भवतः सर्वमपि धनं दानरूपेण वितरणं कारयितुं यः कोऽपि शत्रुः एतं शुकं भवतः समीपे प्रेषितवान् इति भासते । गृहात् एतस्य निष्कासनमेव



क्षेमकरम् '' इति उक्तवन्तः ।

एतत् श्रुत्वा सुदर्शनः शुकं पृष्टवान् ''हे शुक!एकः सन्देहः मां बाधते । साधारणतया पक्षिणाम् उपदेशन- शक्तिः न भवति । किन्तु भवान् कथम् एतादृशीम् उपदेशनशक्तिं प्राप्तवान् ? भवत्सदृशः पक्षी अन्यत्र कुत्रापि अस्ति वा ?'' इति ।

''एकदा विक्रमार्कनामकः राजा शुकरूपं धृत्वा जीवितवान् । तदा सः शुकीम् एकां पत्नीरूपेण स्वीकृतवान् । मम पूर्वजाः तयोः शुकदम्पत्योः पुत्राः । मम बन्धुजनाः सर्वे हिमालयस्य समीपे एव वसन्ति । केवलम् अहम् एकः एव चापल्यतः अत्र आगतवान्'' इति शुकः उक्तवान् ।

शुकस्य उत्तरं श्रुत्वा सुदर्शनः तृप्तः जातः । किन्तु तस्य पुत्राणां तृप्तिः न अभवत् । सुदर्शनः तु शुकस्य वचनानुसारेण दानं करोति स्म। शुकः एकदा 'आर्य! भवान् महादाता-अतः प्रार्थयामि। मह्यं स्वातन्त्र्यं ददाति वा''? इति पृष्टवान्।

''हे शुक! अन्यत् यत्किमपि पृच्छतु ददामि । किन्तु स्वातन्त्र्यं दत्वा भवता विना अहं जीवितुं न शक्नोमि'' इति सुदर्शनः दृढतया उक्तवान् । अनन्तरम् अपि अनेकवारं शुकः 'स्वातन्त्र्यं ददातु' इति पृष्टवान् । किन्तु सुदर्शनः न अङ्गीकृतवान् ।

एकदा सुदर्शनः कार्यान्तरे मग्नः पञ्जरस्य द्वारं पिधातुं विस्मृतवान् । किन्तु शुकः उड्डीय न गतवान् ।

एतत् दृष्ट्वा सुदर्शनः आश्चर्येण शुकं पृष्टवान् ''भवान् स्वातन्त्र्यम् इच्छति । इदानीं पञ्जरस्य द्वारम् उद्घाटितम् एव आसीत् । किमर्थम् उड्डीय न गतवान्'' ?

''अहं कस्मिन् वंशे जातः इति पूर्वमेव उक्तवान्। अहं दुष्टकार्यं कर्तुं न शक्नोमि। भवान् बहु धनं दत्वा मां क्रीतवान् । अतः मम उपरि सर्वविधाः अधिकाराः सन्ति । भवान् मनःपूर्वकम् अनुमतिं न ददाति चेत्, अहं गन्तुं न इच्छामि।

न्यायमार्गं त्यक्तुं मम मनः न इच्छति च'' इति शुकः उक्तवान् ।

अनन्तरं सुदर्शनः पञ्जरस्य पिधानकार्ये श्रद्धां न अवहत्। एकदा शुकः ''भोः श्रीमन्, भवान् द्वारपिधानविषये अश्रद्धां मा करोतु । पुनः पुनः अवकाशः लभ्यते चेत्, मम मनः दुर्बलं भवति । एतादृशदोषेण एव साधुजनाः अपि दुष्टाः भवन्ति । अहम् अपि कदाचित् उड्डयनं करोमि चेत्, नास्ति आश्चर्यम्'' इति उक्तवान् शुकः। सुदर्शनः संशयेन शुकं दृष्ट्वा 'महावंशीयस्य भवतः निर्गमनबुद्धिः कथं जायते ?' इति पृष्टवान् ।

तदा शुकः 'आर्य, अनेके जनाः दोषं कर्तुं नैव इच्छन्ति । किन्तु वातावरणेन लुब्धाः भवन्ति । यद्यपि अहं विक्रमार्कवंशीयः अस्मि । तथापि विक्रमार्कसदृशं धीरत्वं मम नास्ति । कृपया मां लुब्धं मा करोतु । द्वारपिधानविषये जागरूकता अस्तु'' इति उक्तवान् ।

एतत् सर्वं सुदर्शनः पत्नीपुत्रान् प्रति निवेदितवान् । ''एषः अपायकारी शुकः । अनेन भवतः अस्माकं कुटुम्बस्य च यत्किमपि



अहितम् अवश्यं भवति'' इति ते उक्तवन्तः ।

काकतालीयरूपेण पञ्चषदिनेषु सुदर्शनः केनचित् रोगेण पीडितः अभवत् । केनापि औषधेन रोगनिवारणं न अभवत् । तदा वैद्यः सुदर्शनं प्रति ''भवतः रोगस्य निवारणं केवलं राजगन्धिनामिकया मूलिकया एव शक्यम् । किन्तु एतस्मिन् राज्ये सा मूलिका न लभ्यते'' इति उक्तवान् । वैद्यस्य वचनं श्रुत्वा शुकः ''स्वातन्त्र्यं ददामि'' इति आश्वासनं दत्तं चेत्



अहं राजगन्धिमूलिकां आनयामि'' इति उक्तवान्।

''हा हन्त ! रोगपीडितस्य मम समीपे भवान् न भवति चेत्, कथम् अहं जीवामि ?'' इति सुदर्शनः भयेन उक्तवान्। एतस्य कारणात् एव यजमानः रोगग्रस्तः जातः इति वदन्तः पत्नी पुत्राः च पञ्जरात् मुक्तं कृतवन्तः। किन्तु शुकः सुदर्शनाय द्रोहं न कृतवान्। परेद्युः एव सः राजगन्धिमूलिकां चञ्च्वा गृहीत्वा आगतवान्।

वैद्यः तया मूलिकया औषधं कृत्वा चिकित्सां कृतवान्। यदा सुदर्शनः सम्पूर्णतया रोगविमुक्तः जातः तदा सः शुकं दृष्ट्वा ''भवतः माहात्म्येन अहं पुनः जीवनं प्राप्तवान्। अतः भवान इतः निर्गच्छति चेत्, अहं विरोधं कर्तुं न शक्नोमि। किन्तु भवान् अत्रैव तिष्ठति चेत मम महान् सन्तोषः भवति'' इति उक्तवान्।

तदा शुकः ''बहुकालानन्तरं मम बन्धुजनान् दृष्ट्वा आगतवान्। आगमनसमये पुनः शीघ्रमेव प्रत्यागच्छामि इति उक्त्वा अपि आगतवान्। भवान् मम कृते बहुधनस्य व्ययं कृतवान्। प्रत्युपकाररूपेण अहं भवतः प्राणान् रक्षितवान्। अतः इदानीं भवता मम स्वातन्त्र्यस्य विरोधः न कर्तव्यः'' इति उक्त्वा पञ्जरतः बहिः उड्डीय निर्गतवान्।

गच्छति काले सुदर्शनः सुखेन जीवति स्म। एवं हि सति कतिपयदिनानन्तरं सः शुकः पुनः सुदर्शनस्य समीपम् आगत्य ''भवतः गृहस्य जीवनमेव मह्यम् अतीव रोचते। मम बन्धुजनैः सह स्थातुं मम मनः न प्रवर्तते। अतः भवता सह अत्र एव स्थातुं आगतवान्'' इति याचितवान्।

किन्तु सुदर्शनः शुकस्य वचनं न अङ्गीकृतवान्। ''यत्र कुत्रापि गच्छतु'' इति शुकं गृहतः प्रेषितवान् च।

एवं रीत्या वेतालः कथां समाप्य "महाराज! सः शुकः सुदर्शनस्य प्राणान् अपि रक्षितवान्। एतादृशस्य शुकस्य कृते अपि आश्रयं दातुं सः किमर्थं निराकृतवान् ? सः मान्त्रिकशुकः इति सुदर्शनः अपि विश्वासं कृतवान् वा? एतस्य संशयस्य उचितम् उत्तरं भवान् जानन् अपि यदि न वदति, तर्हि भवतः शीर्षं सहस्रधा छिन्नं भवति" इति उक्त्वा तूष्णीम् अभवत् ।

तदा त्रिविक्रमः एवम् उक्तवान्-"सः मान्त्रिकशुकः इति विश्वासं कृतवान् एव। यद्यपि तस्य समीपे पर्याप्तं धनं आसीत्। पत्न्याः पुत्राणां च समीपे सः प्रियः आदरणीयः च आसीत् । तथापि कयाचित् अनिर्वचनीयचिन्तया सः पीडितः आसीत् । तदपि सत्यमेव । किन्तु शुकः स्वीयमधुरवचनैः उचिताभिः सूचनाभिः तस्य चिन्तां दूरीकृतवान् । तस्मादेव कारणात् सुदर्शनः शुकाय स्वातन्त्र्यं दातुं न अङ्गीकृतवान् । तस्य रोगस्य निवारणार्थं शुकः राजगन्धि-मूलिकाम् आनीय 'पुनः बन्धुजनानां समीपं गच्छामि । मम स्वातन्त्र्यस्य अवरोधः मास्तु' इति उक्तवान् । तस्य वचनेन बन्धुजनानां विषये मानवस्य कर्तव्यं किम्, आत्मीयता नाम कीदृशी इति सुदर्शनः ज्ञातवान् । सः मानवसदृशः शुकः । अनेके जनाः स्वशक्त्या साधयितुम् असमर्थाः, अन्यान् आश्रित्य आत्मीयान् सर्वान् विस्मरन्ति । तथा एव चतुरः शुकः आत्मीयान् प्रति कर्तव्यप्रज्ञां विस्मृत्य सुदर्शनस्य समीपे सुखजीवनं अपेक्षितवान्। सुदर्शनस्य गृहे अहारार्थं क्लेशः नास्ति । शुकस्य एतत् दौर्बल्यं निवारयितुम् एव सुदर्शनः स्वगृहे आश्रयं दातुं निराकृतवान्" इति ।

एवं महाराजस्य मौनभङ्गे जाते, तत्क्षणमेव वेतालः शवेन सह अदृश्यः भूत्वा पूर्ववत् वृक्षस्य शाखायां प्रलम्बमानः आसीत् ।



# उत्कोचग्राही

विदिशा नाम नगरी । तत्र राज्ञः आस्थाने कर्कटशास्त्री नाम ज्यौतिषिकः। सः राज्ञः समीपे वदति स्म– "अहं देव्याः उपासकः । देव्याः अनुग्रहेण विवादादिषु अन्तर्भूतं सत्यं ज्ञातुं समर्थः अस्मि"। अतः न्यायव्यवहारः भवति चेत् कर्कटशास्त्रिणम् एव न्यायाधीशत्वेन राजा नियोजयति स्म । न्यायव्यवहारे मनुष्याणाम् अपेक्षया देव्याः निर्णयः एव श्रेष्ठः इति राज्ञः अन्येषां च विश्वासः। किन्तु कर्कटशास्त्री देव्याः नाम्नि उत्कोचं गृहीत्वा अन्यथा निर्णयं वदति स्म।

'अनुग्रहः अपि असत्यम् एव' इति किंवदन्ती प्रसृता । यथार्थं ज्ञातुं मन्त्रिणम् राजा पृष्टवान् । मन्त्री एकम् उपायं सूचितवान् । राजा कर्कटशास्त्रिणम् आहूय उक्तवान्– 'शास्त्रिन् ! अस्माकम् आस्थाने नियुक्तः श्रीपतिः, सहोद्योगिनः विषये उत्कोचस्य अपवादम् आरोप्य न्यायनिर्णयं निरीक्षमाणः अस्ति । कारणान्तरेण तस्य नाम न प्रकाशयामि । श्रीपतेः आरोपविषये भवान् एव प्रमाणम् । न्यायनिर्णयानन्तरं तस्य नाम प्रकाशयामि' ।

तद्दिने रात्रौ कर्कटशास्त्रिणः गृहं गत्वा श्रीपतिः प्रार्थितवान्- "आर्य ! अहं मम सहोद्योगिनः विषये उत्कोचस्य अपवादम् आरोपितवान् । तद् आरोपणं यदि असत्यं भवति तदा राजा माम् एव दण्डयति । अतः अस्मिन् व्यवहारे भवान् मम साहाय्यं करोतु" । एवं प्रार्थनां कृत्वा सहस्रं रूप्यकाणि अपि श्रीपतिः दत्तवान् । अनन्तरदिने कर्कटशास्त्री सभायां एवम् उक्तवान्– 'महाराज ! श्रीपतिः यत् आरोपणं कृतवान् तत् सत्यम् एव" ।

राजा कर्कटशास्त्रिणः बन्धनार्थम् आज्ञापितवान् । 'किमर्थं मम बन्धनम्'? इति शास्त्री पृष्टवान् । 'उत्कोचस्य आरोपं भवतः विषये एव श्रीपतिः कृतवान्' इति राजा उक्तवान् ॥





# मूर्खग्रामः

एकं नगरम् । तत्र कोटीशनामकः कश्चित् वसति स्म। सीताफलं तस्य प्रियं फलम् आसीत्। एकदा सः मार्गे गच्छति स्म । मार्गमध्ये कान्तेशनामकः मिलितवान् । कान्तेशः मासतः पूर्वं दूरदेशतः आगत्य तस्मिन्नेव नगरे वसति स्म । तस्य हस्ते एकम् उत्तमं सीताफलम् आसीत् ।

फलं दृष्ट्वा कोटीशः आश्चर्येण 'अहो! किम्-एतत्! अकाले सीताफलम् । एतत् फलं भवान् कुत्र लब्धवान् ? प्रायः इदमिदानीमेव वृक्षात् अवचित्य आनीतम् इव दृश्यते भोः !, इति पृष्टवान् ।

'अत्र आश्चर्यस्य किमस्ति कारणम् ? मम गृहस्य पश्चाद्भागे एकः आम्रवृक्षः अस्ति । तस्मिन् वृक्षे संवत्सरस्य सर्वेषु कालेषु सर्वविधानि फलानि अपि लभ्यन्ते' इति कान्तेशः उक्तवान् ।

'नितराम् असम्भवम् एतत् ।' इति कोटीशः पुनः अधिकेन विस्मयेन उक्तवान् ।

'किमर्थम् असम्भवम्?' नित्यानन्दयोगिनः मम गृहम् आगत्य कूपस्य जलं मन्त्रपूतं कृत्वा गतवन्तः । तदारभ्य एवमेव प्रवर्तते । बहवः जनाः आगत्य मम कूपस्य जलं याचन्ति । अहं तु न ददामि इत्येव वदामि । किमर्थम् इति चेत्, यदि मम कूपस्य जलेन सर्वे वृक्षाः सर्वविधानि फलानि दातुं समर्थाः भवन्ति, तर्हि मम वैशिष्ट्यं किं वा स्यात् ? तथा याचना अपि अयुक्ता । अस्य जलस्य दानमपि अयुक्तम्'' इति उक्त्वा कान्तेशः अग्रे गतवान् ।

कान्तेशस्य गृहं बहुदूरे आसीत् । तथापि तत्र गत्वा तं विचित्रवृक्षं दृष्ट्वा आगन्तव्यम

इति कोटीशस्य इच्छा अभवत्। तदेव चिन्तयन् सः किञ्चित् दूरं गतवान्। तदा पार्श्वस्थ-उपमार्गतः गोविन्दः आगच्छति स्म। सः कोटीशस्य परिचितः एव। सः अपि अतीव त्वरायुक्तः इव दृश्यते स्म। तेन सह किमपि वक्तुं कोटीशः यदा मुखम् उद्घाटितवान्, तत्पूर्वमेव गोविन्दः–"किं भोः? कान्तेशस्य गृहं भवान् आगच्छति वा? तत्र एतस्मिन् जन्मनि एव दुर्लभस्य विचित्रस्य दर्शनं भवति" इति उक्तवान्।

"तत् अहं जानामि। तस्य गृहस्य आम्रवृक्षे सीताफलं मिलति। तदेव किल?" इति कोटीशः पृष्टवान्।

"अरे! तथा वा? एतत् अन्यत्। तस्य गृहस्य उद्याने एकः सर्पः वसति। सः सर्पः फणाम् उन्नमय्य अतिथिजनान् आशीर्वचनैः अनुगृह्णाति इति श्रूयते। भवान् न जानाति इति मन्ये" इति उक्तवान् गोविन्दः।

गोविन्दस्य वचनं श्रुत्वा कोटीशस्य आश्चर्यम् अभवत्। एवमेव कोटीशस्य वचनेन गोविन्दः मूकः एव अभवत्। एवं तर्हि कान्तेशस्य गृहे बहूनि विचित्राणि सन्ति इति कोटीशः गोविन्दः च आलोचितवन्तौ।

अनन्तरं कोटीशः गोविन्दः च मिलित्वा कान्तेशस्य गृहं प्रस्थितौ। मार्गमध्ये नागराजः इति अन्यः कश्चित् मिलितवान्।



सः "किम् एतत् श्रुतं वा? कान्तेशस्य गृहे एकः पारिजातवृक्षः अस्ति। सः प्रातः आरभ्य सायंपर्यन्तं निद्रां करोति। रात्रिकाले जागरणं करोति, तथा गृहस्य रक्षणं करोति। तस्य पत्राणि स्पर्शेन हसन्ति, उत्पाटनेन रोदनं कुर्वन्ति इति वदन्ति" इति उक्तवान्।

"एवं वा! एषः कान्तेशः यः कोऽपि मान्त्रिकः वा ऐन्द्रजालिकः वा स्यात्!" इति आश्चर्येण कोटीशः उक्तवान्।

त्रयः अपि भाषमाणाः चलन्ति स्म। तदा मार्गे पुनः अन्ये केचन मिलितवन्तः। तेषु एकैकः अपि एकैकं विचित्रं उक्तवान्। कान्तेशस्य गृहे सम्मार्जनी स्वयमेव मार्जनकार्यं करोति इति एकः। तस्य गृहे एकम् अक्षयपात्रं सततं धनं ददाति इति अन्यः।

एवं रीत्या आहत्य दश जनाः कान्तेशस्य गृहं गतवन्तः। तस्मिन् समये कान्तेशस्य गृहस्य द्वारं पिहितम् आसीत्। कोटीशः द्वारशब्दं कृतवान्।

तदा पञ्चदश-वर्षीयः कश्चित् बालकः आगतवान्। सः आश्चर्येण 'भवन्तः सर्वे किमर्थम् आगतवन्तः?' इति पृष्टवान्।

'भवतां गृहस्य विचित्राणि द्रष्टुम् आगतवन्तः' इति कोटीशः उक्तवान्।

'एवं वा? भवन्तः प्रमादतः अन्यत् गृहम् आगतवन्तः इति मन्ये। अस्माकं गृहे तु तादृशं विचित्रं किमपि नास्ति' इति बालकः





उक्तवान् ।

स्वयं कान्तेशः एव एतानि अद्भुतानि सन्तीति उक्तवान् आसीत् । तानि द्रष्टुम् एव वयम् आगतवन्तः' इति कोटीशः उक्तवान् ।

'मम जनकः किमर्थं तथा उक्तवान् इति अहं न जानामि' इति उक्त्वा बालकः पुनः गृहस्य अन्तः गतवान् ।

बालकस्य वचने अविश्वासं प्रकटयन्तः सर्वे स्वयमेव गृहं प्रविष्टवन्तः । बालकस्य वचनं यथार्थमेव आसीत् । गृहे यत्किमपि विचित्रं न आसीत् । गृहस्य पृष्ठतः कूपः अपि न आसीत् । विविध-फलदाता आम्रवृक्षः अपि न आसीत् । एतत् सर्वं ज्ञात्वा तेषां महान् क्रोधः आगतः । ते सर्वे क्रोधेन तपन्तः कान्तेशम् अन्विष्यन्तः तद्गृहतः निर्गतवन्तः । अनन्तरम् एकत्र ते कान्तेशं दृष्टवन्तः ।

क्रोधतप्तः कोटीशः -'कीदृशः धूर्तः भवान्? अस्माकं समीपे असत्यम् उक्तवान् किल?' इति पृष्टवान् ।

'आम्' इति कान्तेशः निःसङ्कोचम् उक्तवान् ।

'किमर्थं तथा उक्तवान्?' कोटीशस्य नेत्र-द्वयतः अग्निकणाः निस्सरन्ति स्म ।

'यदा वयं नूतनतया आगत्य एकस्मिन् ग्रामे वसामः, तदा तत्र कियन्तः मूढाः मूर्खाः च सन्ति इति, एवं रीत्या एव किल वयं ज्ञातुं शक्नुमः?' इति उक्तवान् कान्तेशः ।

'किम्, असत्यवचनेन तत् ज्ञातुं शक्यते वा ?' इति क्रोधाविष्टः गोविन्दः पृष्टवान् ।

'किमर्थं न शक्यते भोः? ये ये मम असत्य-वचनानि विश्वसन्ति, ते ते मूढाः मूर्खाः च किल !' इति उक्तवान् कान्तेशः ।

किञ्चित्कालानन्तरं गोविन्दः शनैः पृष्टवान् 'असत्यवचनानि के के विश्वसन्ति इति भवान् कथं ज्ञातुं शक्नोति?' इति ।

'ये मम असत्यवचनं विश्वसन्ति, ते मम गृहं गच्छन्ति । मम पुत्रः तान् पश्यति। एकवारं दृष्टं मुखं सः कदापि न विस्मरति । यदा अहं

पृच्छामि, तदा सः समीचीनतया मुखवर्णनं करोति। तेन अहं मूर्खान् जानामि' इति उक्तवान् कान्तेशः।

'इदानीं भवान् गृहं गच्छति वा?' इति कोटीशः पृष्टवान्। 'न, नगरमध्ये किञ्चित् कार्यान्तरम् अस्ति' इति उक्तवान् कान्तेशः। 'अस्तु। वयं गच्छामः'। इति उक्त्वा ते सर्वे पुनः साक्षात् कान्तेशस्य गृहमेव गतवन्तः। कान्तेशस्य पुत्रम् उक्तवन्तः– 'भोः! अत्र अस्माकम् आगमनविचारः सम्भाषणविषयः च भवतः जनकस्य समीपे न वक्तव्यः। तदर्थं वयम् सर्वे एकैकं सुवर्णनाणकं दद्मः' इति कोटीशः उक्तवान्।

'अस्तु' इति कान्तेशस्य पुत्रः अङ्गीकृतवान्। तदा कोटीशः सर्वेषां हस्ततः दशनाणकानि सङ्गृह्य कान्तेशस्य पुत्रस्य हस्ते दत्तवान्।

अनन्तरं सर्वे निश्चिन्ताः ततः निर्गताः।

कान्तेशः रात्रौ गृहं प्रत्यागतवान्। तदा पुत्रः उक्तवान्–'प्रातः आरभ्य सायङ्कालपर्यन्तम् अद्भुतविषयं द्रष्टुम् आगतेभ्यः आहृत्य शतं नाणकानि मिलितानि। इदानीं भवान् ऋणादिग्रहणं विना अत्र वाणिज्यं कर्तुं शक्नोति' इति।

'आम्, यत्र केवलं मन्दाः मूर्खाः च सन्ति, तदपेक्षया यत्र ते मूर्खाः स्वीय-अज्ञानस्य प्रदर्शनं कर्तुं न इच्छन्ति तत्र लाभः अधिकतरः मिलति। अस्मिन् नगरे तादृशाः बहवः जनाः सन्ति' इति कान्तेशः उक्तवान्।

कान्तेशः तेन धनेन महिषीः क्रीतवान्। क्षीरवाणिज्यस्य आरम्भं कृतवान्। तस्य वाणिज्यं प्रतिदिनं अभिवर्धते स्म। उत्तमः क्षीरवणिक् इति सः प्रसिद्धः अपि अभवत्।





# ज्ञानोदयः

ब्रह्मदत्तः काशीं परिपालयति स्म । तस्मिन् काले एव कोसलदेशे बोधिसत्वः नाम महाराजः आसीत् । तस्य बोधिसत्वस्य पुत्रः सत्यसेनः । युक्ते समये सत्यसेनस्य यौवराज्याभिषेकः विवाहः च अभवत् । तस्य पत्नी शम्बुलादेवी । सा अनुपमा सुन्दरी ।

कानिचन दिनानि अतीतानि । दौर्भाग्येण युवराजः सत्यसेनः कुष्ठरोगेण पीडितः अभवत् । बहवः वैद्याः चिकित्साः कृतवन्तः । किन्तु रोगः न शान्तः, वर्धितः एव । जुगुप्साजनकेन रोगेण पीडितः युवराजः जनानां मध्ये वासं कर्तुं न इष्टवान् । अतः सत्यसेनः अरण्ये वासं कर्तुं प्रस्थितवान् । तदा पत्नी शम्बुलादेवी अपि पत्या सह प्रस्थिता । अरण्ये पर्णशालां निर्माय तत्र पत्न्या सह सत्यसेनः वासं कृतवान् ।

शम्बुलादेवी तु सूर्योदयकाले एव उत्थाय गृहकार्यं समाप्य, पत्युः दन्तधावनार्थं सज्जीकरोति । पत्युः मुख-प्रक्षालनानन्तरं उपाहारार्थं फलानि ददाति । अनन्तरं स्वयमपि किञ्चित् खादित्वा खनित्रं कण्डोलं च स्वीकृत्य अरण्ये अटित्वा कन्दमूलानि आनयति । नदीतः जलम् आनीय पत्या स्नानं कारयति । पत्युः भोजनानन्तरं स्वयं भोजनं करोति । एवं रीत्या जागरूका सती सा पत्युः शुश्रूषां कुर्वती आसीत् । एकदा फलानि सङ्ग्रहीतुं नूतन-प्रदेशाभिमुखं सा प्रस्थिता । किञ्चित् दूरे एव एकः लघुसरोवरः आसीत् । तं दृष्ट्वा सा बहु सन्तुष्टा अभवत् ।




अतः सरोवरे अवतीर्य स्नानं कृतवती। स्नानानन्तरम् सा उपरि आगतवती। तदा तस्याः शरीरं सुवर्णवर्णेन प्रकाशते स्म।

किन्तु एतत् परिवर्तनं सा न ज्ञातवती। स्नानेन सन्तुष्टा सा पर्णशालाभिमुखं प्रस्थिता। मार्गमध्ये गच्छन्तीं तां दृष्ट्वा कश्चित् किरातः सहसा निरुध्य उक्तवान् "सुन्दरि ! कृपया मम गृहम् आगच्छतु। मां परिणयतु।"

"भोः ! दुरात्मन् ! मां बलात्करोति ? एतस्य फलम् अनुभवतु" इति कमण्डलुजलेन शापं दत्तवती। वज्रेण ताडितः इव सः किरातः उच्चैः आक्रोशन् भूमौ पतितवान्।

किरातस्य उपरोधतः उन्मुक्ता शम्बुलादेवी जलम् अपि स्वीकृत्य पर्णशालाम् आगतवती। पतिः पृष्टवान्- "किमर्थम् अद्य विलम्बः कृत?"

प्रवृत्तं सर्वं वृत्तान्तं आदितः अन्तपर्यन्तं शम्बुलादेवी निवेदितवती। किन्तु तस्याः वचने अविश्वसन् सत्यसेनः उक्तवान्- "स्त्रियः स्वयं कल्पयित्वा यत्किमपि वक्तुं समर्थाः भवन्ति। यथेच्छं विहरन्तीं भवतीं को वा पृच्छति ?"

"स्वामिन् ! मम वचनं यदि सत्यं तर्हि एतेन जलेन भवतः कुष्ठरोगः शान्तः भवतु" इति वदन्ती शम्बुलादेवी कमण्डलुस्थेन जलेन पत्युः अभिषेकं कृतवती। अनुक्षणमेव तस्य रोगः प्रशान्तः। प्रशान्तेन रोगेण सत्यसेनः बहु सन्तुष्टः अभवत्। किन्तु पत्न्याः पातिव्रत्यम् एव अत्र कारणम् इति सः न ज्ञातवान्।

अनन्तरं सत्यसेनः वनवासं त्यक्त्वा गृहाभिमुखं प्रस्थितवान्।

पुत्रस्य आगमनं ज्ञात्वा महाराजः बहुसन्तुष्टवान्। छत्रैः चामरैः च सह स्वपुत्राय स्वागतं कृतवान्। "एषा शम्बुलादेवी मम पुत्रस्य रोगम् अपनीतवती। अपि च रोगग्रस्तम् अपि मम पुत्रं रोगप्रशमनपर्यन्तं शुश्रूषितवती"

इति विचिन्त्य शम्बुलादेवीं पट्टमहिषीं कृत्वा, युवराजाय सत्यसेनाय पट्टाभिषेकं च कृत्वा महाराजः वानप्रस्थाश्रमं स्वीकृतवान् ।

सत्यसेनः पितुः आज्ञाम् उल्लङ्घयितुम् असमर्थः भूत्वा शम्बुलादेवीं पट्टमहिषीत्वेन स्वीकृतवान्, न तु प्रीत्या । अतः शम्बुलादेव्यां औदासीन्यम्, अन्यासु पत्नीषु आदरं च प्रदर्शयितुम् आरब्धवान् । पत्युः तिरस्कारेण सपत्नीनाम् असूयया ईर्ष्यया च शम्बुलादेवी चिन्ताक्रान्ता कृशा च अभवत् । कानिचित् दिनानि अतीतानि । एकदा शम्बुलादेव्याः श्वशुरः अरण्यात् नगरम् आगतवान् । भोजनार्थं शम्बुलादेव्याः गृहं गतवान् । तस्याः दीनावस्थां दृष्ट्वा आश्चर्येण पृष्टवान्- "किमर्थं भवती दुःखिता ? किम् अभवत् ? "

"पत्युः आदराभावे किं जीवितेन?" इति शम्बुलादेवी निश्वसन्ती उक्तवती । वृद्धः महाराजः सर्वं वृत्तान्तं ज्ञातवान्। अनुक्षणमेव सत्यसेनम् आहूय महाराजः उपदिष्टवान्- "वत्स ! सत्यसेन ! किं पापम् आचरन् अस्ति ? कृतघ्नतायाः अपेक्षया अधिकं पापं लोके नास्ति एव । एषा जुगुप्साजनकेन रोगेण युक्तस्य भवतः शुश्रूषां कृत्वा रोगस्य निवारणं कृतवती । एतां पत्नीं राज्यमदेन तृणवत् किं धिक्करोति ? राज्य-सम्पदं च सर्वे प्राप्तुं शक्नुवन्ति। पतिव्रतां पत्नीं तु भाग्यवान् एव प्राप्नोति, न तु सर्वः जनः । अतः शम्बुलादेवीं मा तिरस्करोतु । तां पतिव्रतां तिरस्कृत्य भवान् एव अधः पतति।"

पितुः उपदेशेन सत्यसेनस्य ज्ञानोदयः अभवत् । सः शम्बुलादेव्याः समीपे गत्वा क्षमां याचितवान् । शम्बुलादेवीं स्वस्य तथा इतरासां पत्नीनां च स्वामिनीं कृतवान् । अनन्तरं राहुमुक्ता चन्द्रकला इव परिशोभमाना सा सुखेन राजप्रासादे आसीत् ।






# आंग्लशासनस्य आरम्भः

पञ्चदशशतके 'इटलि' देशस्य नाविकः कोलम्बस् स्पेयिन् देशस्य राजदम्पत्योः प्रोत्साहेन, भारतदेशं प्रति समुद्र-मार्गम् अन्वेष्टुं प्रस्थितवान् । किन्तु सः १४९८ वत्सरे 'अमेरिका' देशम् अन्विष्टवान् ।

तस्मिन् एव वर्षे पोर्चुगीस् नाविकः वास्कोडिगामा, समुद्रमार्गेण भारतदेश प्राप्तवान् । कल्लिकोटे प्रदेशस्य राजा जवोरिन् महाशयः तस्मै स्वागतम् उक्तवान् । अनन्तरं आंग्लाः, फ्रेञ्चजनाः सर्वेऽपि वाणिज्यव्याजेन भारतम् आगन्तुम् आरब्धवन्तः ।





फ्रेञ्चजनाः आंग्लाः च वाणिज्यरूपेण आगत्य भारते एव स्थिराः सञ्जाताः । एवं वाणिज्य–व्याजेन आगताः आंग्लाः फ्रेञ्चजनाः च भारते राज्यं स्थापयितुम् इच्छन्तः, क्रमशः स्पर्धारूपेण युद्धम् आरब्धवन्तः ।




१७४० वत्सरे ऐरोप्यखण्डे युद्धस्य आरम्भः अभवत्। इंग्लेण्ड—फ्रान्स-देशयोः मध्ये शत्रुत्वं समुत्पन्नम्। एतदनुगुणं दक्षिणभारतस्य समुद्र-तीरे अपि आंग्लनौकानां फ्रेञ्चनौकानां च मध्ये, युद्धस्य आरम्भः अभवत्।

राबर्टक्लैव् नामकस्य साहसि-युवकस्य कारणतः आंग्लेयानाम् अदृष्टं फलि-तम्। सः अष्टादशे वयसि गृहतः पलायितः,-ईस्टइण्डिया कम्पनि-मध्ये लिपिकः आसीत्। चन्नपट्टने 'ईस्ट-इण्डिया कम्पनि' सम्बन्धि 'सेण्ट्-जार्ज' दुर्गम् आसीत्। तत्र क्लैव् आगतवान्।





बङ्गाल-प्रदेशे युवकः महाराजः सिराजुद्दौल् महोदयः आंग्लेयेषु विरोधं प्रकटितवान्। सः स्वराज-धानीतः — मुर्षिदाबाद्तः— प्रस्थाय ईस्ट इण्डिया कम्पनि इत्येतस्य केन्द्र-राजधानीं कलकत्ताम् आक्रान्तवान्। विलियम् दुर्गं तस्य वशे आगतम्।

तदा राबर्ट् क्लैव् महोदयः स्वसैन्यं कलकत्ताम् आनीतवान् । विलियम् दुर्गं वशीकृतवान् । अनन्तरं सिराजुद्दौल् यदा युद्धार्थम् आगतः तदा क्लैव् तेन सह सन्धिं कृतवान् । एतदनुसारं सिराजुद्दौल स्वराजधानीं प्रतिनिवृत्तः ।





सिराजुद्दौल प्रतिनिवृत्यनन्तरं क्लैव्, सेनानायकद्वारा मिर्जाफर् कृते अधिकारस्य आशां प्रदर्शितवान् । अकस्मात् नवाब-विरुद्धं युद्धं प्रकटितम् । युद्धे, दुष्टः सेनानायकः मिर्जाफरः, सैन्यं प्रति युद्धं कर्तुं न आज्ञापितवान् एव ।

नवाबः पराजितः । मिर्जाफरस्य सैनिकाः नवाबं क्रूररीत्या मारितवन्तः च। मिर्जाफरः नवाबः अभवत् । किन्तु प्रजाभ्यः सङ्गृहीतं सर्वम् अपि आंग्लेयाः वशीकुर्वन्ति स्म । एवं च मिर्जाफरः क्लैव् कृते लक्षशः रूप्यकाणि, ईस्ट इण्डिया कम्पनि-कृते कोटिशः रूप्यकाणि दत्तवान् ।





मिर्जाफरस्य व्यवहारः तृप्तिकरः नास्तीति कृत्वा आंग्लेयाः तस्य जामातरं मीरखासिमं, सिंहासने स्थापितवन्तः। सः अपि आंग्लेयानाम् आज्ञां न पालितवान्। १७६४ वत्सरे बक्सारयुध्दम् अभवत्। मीरखासिमः दिल्लिराज्यपालकस्य 'षा आलम' महोदयस्य साहाय्यं लब्धवान्।

युध्दे मीरखासिमः पराजितः। सः दिल्लीं गत्वा तत्र अतीव शोचनीयावस्थायां मरणं प्राप्तवान्। क्लैव राजा भूत्वा ओरिस्सा, बङ्गाल, बिहार प्रान्तेभ्यः करस्वीकरणस्य अधिकारं मोगल-पालकस्य कृते दातुम् अङ्गीकृतवान्। एतेन क्लैव महोदयस्य अधिकः धनलाभः अभवत्।






क्लैव् वीरोचितं स्वागतं निरीक्षमाणः इग्लेण्ड देशं गतवान्। किन्तु तत्र तस्य द्रोहचिन्तनं दुष्टव्यवहारं च ज्ञात्वा बहवः तस्य द्वेषम् अपि कृतवन्तः। एतत् असहमानः क्लैव् महोदयः, छुरिकया आत्महत्यां कृतवान्। एवं क्लैवस्य अन्त्यम् अभवत्।



# विश्वासार्हः

एकस्मिन् ग्रामे लोपराजः इति धनिकः आसीत् । तस्य गृहे शरभनामकः एकः अनाथः सेवकः आसीत् । सः सर्वथा बधिरः। यजमानेन एकम् उक्तं चेत्, शरभः कदाचित् अन्यत् करोति स्म। एतेन कृतम् एव कार्यं पुनःकरणीयं भवति स्म । तथापि लोपराजः शरभं न निन्दति।

लोपराजस्य पुत्रः वीरराजः । वीरराजस्य कृते शरभस्य व्यवहारः न रोचते स्म। सः तदा तदा पितरं वदति स्म– 'बधिरेण सह कः भोः! व्यवहरति? लघुकार्यार्थम् अपि बहु उच्चैः वक्तव्यम् ! एषः शरभः विना वेतनं तु कार्यं न करोति। एषः एव भवेत् इति न सजाज्ञा। अतः एतं निष्कास्य अन्यं सेवकं कार्ये नियोजयामः। तदेव वरम्' इति।

लोपराजः एतत् न अङ्गीकरोति। सः वदति स्म– 'बधिरः चेत् अपि, शरभः विश्वासार्हः । बहुकालतः अस्मान् एव विश्वस्य सः जीवति । अतः गृहतः निष्कासनं न उचितम्' इति ।

वस्तुतः शरभः वीरराजसमीपे अपि विनयेन विधेयतया एव व्यवहरति स्म । तथापि वीरराजः शरभस्य विषये सर्वदा कुप्यति। समये प्राप्ते, यथाकथञ्चित् एषः कार्यतः निष्कासनीयः' इति वीरराजः मनसि एव निश्चयं कृतवान् ।

एकदा लोपराजः पत्न्या सह तीर्थयात्रां प्रस्थितः । गृहस्य समग्रम् अधिकारं पुत्राय समर्पितवान् ।



वीरराजः चिन्तितवान्– 'शरभं निष्कासयितुम् एषः एव युक्तः समयः' इति । अनन्तर-दिने एव शरभस्य वेतनादि- व्यवहारं समापितवान्, गृहतः निष्कासितवान् च ।

"कः अपराधः अभवत् ? किमर्थम् उद्योगः नष्टः ?" इति शरभः न ज्ञातवान् । वीरराजः बहुकोपशीलः इति शरभः जानाति एव । अतः सः एतद्विषये यजमानसमीपे किमपि प्रस्तावं न कृतवान् । स्ववस्तूनि स्वीकृत्य गृहतः निर्गतवान् ।

अनन्तरं शरभः ग्रामे अन्यत्र उद्योगं प्राप्तुं प्रयत्नं कृतवान् । किन्तु तस्य कृते कोऽपि उद्योगं दातुं न इच्छति । केचन –'अये! भवान् प्रथमम् एव बधिरः । पुनः चौर्यबुद्धिः अपि अस्ति इति श्रुतम्" इति उच्चैः उक्तवन्तः ।

निरुद्योगापेक्षया चोरः इति आक्षेपेण शरभः बहु खिन्नः । वीरराजः एव एतादृशं किमपि चौर्यस्य आरोपं कृतवान् इति सः ज्ञातवान् । शरभेण शाश्वतिकः उद्योगः कुत्रापि न लब्धः । अतः सः प्रतिदिनम् अपि एकैकत्र कार्यं करोति । तेन एव जीवति ।

एकस्मिन् दिने मध्याह्नसमये शरभः मार्गे गच्छति स्म । तदानीम् उपमार्गतः वृषभद्वयं रोषेण परस्परं कलहं कुर्वत् आगतम् । तदा वीरराजस्य पञ्चवर्षीयः पुत्रः शालां गच्छन् तस्मिन् एव मार्गे आगतवान् ।

वृषभयोः कलहः प्रचलति । सर्वे गृहस्य वितर्दिकायां स्थिताः । बालकं मार्गमध्ये दृष्ट्वा केचन आक्रोशनं कृतवन्तः- "हन्त! वीरराजस्य पुत्रः" इति । किन्तु बालकस्य रक्षणार्थं कोऽपि गृहं त्यक्तुं धैर्यं न कृतवान् ।

शरभः एतत् दृष्टवान् । धावन् आगत्य वृषभस्य पादे पतन्तम् बालकं रक्षितवान् । बालकं स्कन्धे आरोप्य पार्श्वस्थं गृहं गतवान् । तत्र सोपानारोहणसमये स्खलन् पतितवान् । वीरराजस्य पुत्रस्य किमपि न जातम् । किन्तु शरभस्य पादे क्षतः जातः ।

सः उत्थातुम् अशक्तः तत्रैव पतितवान्। वेदनया रोदितुम् आरब्धवान् ।

पुत्रस्य प्राणापायपरिस्थितिं श्रुत्वा वीरराजः त्वरया धावन् तत्र आगतवान् । वेदनया कष्टम् अनुभवन्तं शरभं, तथैव भयेन पार्श्वे स्थितं स्वपुत्रम् अपि दृष्टवान् ।

वीरराजः तत्रत्यैः जनैः प्रवृत्तं वृत्तान्तं ज्ञातवान् । शरभविषये करुणा उत्पन्ना । पश्चात्तापेन अश्रूणि आगतानि । हस्तद्वयेन शरभम् उत्थाप्य वीरराजः उक्तवान्- " भोः, अहं यत् वदामि तत् भवान् प्रायः श्रोतुं न शक्नोति । तथापि चिन्ता नास्ति । भवतः चौर्यबुद्धिः अस्ति इति पापबुद्धिः अहम् एव उक्तवान् तत् असत्यम्। निष्कासितं इति कोपम् अकृत्वा भवान् मम पुत्रं रक्षितवान् । पितुः वचनं सत्यम् एव । निश्चयेन भवान् विश्वासार्हः इति अहम् इदानीं ज्ञातवान्" इति । चलितुम् अशक्तं शरभं द्वयोः पुरुषयोः साहाय्येन स्वगृहं नीतवान् ।

पुनः एकसप्ताहानन्तरं लोपराजः तीर्थयात्रां समाप्य गृहम् आगतवान् । गृहे विद्यमानं दृश्यं दृष्ट्वा सः आश्चर्यचकितः । वीरराजः स्वहस्त-साहाय्येन स्खलन्तं शरभं मुखद्वारसमीपम् आनयति स्म ।

"एतस्य किम् अभवत्? भवान् एव हस्तस्य-साहाय्येन आनयति किल ? बधिरेण एतेन सह व्यवहारः प्रथमम् एव कष्टकरः आसीत् । इदानीं तु पङ्गुत्वम् ? किम् अभवत् एतस्य ? "इति पृष्टवान् लोपराजः ।

"शरभः बधिरः पङ्गुः च स्यात् । किन्तु सः असाधारणः पुरुषः । अस्माकं कुटुम्बस्य उपरि तस्य कियान् विश्वासः" ! इति वदन् वीरराजः सर्वं वृत्तान्तं निवेदितवान् ।

स्व-पौत्रः अपायतः मुक्तः, तथैव शरभ-विषये पुत्रस्य कोपः दूरंगतः इति ज्ञात्वा लोप-राजः अतीव सन्तुष्टः ।



# कृपणाग्रेसरः

पद्माभिः एकः महाकृपणः। मरणानन्तरं सः साक्षात् स्वर्गद्वारसमीपं गतवान्।

द्वारपालकाः तं दृष्ट्वा आश्चर्येण उक्तवन्तः— 'भवतः अत्र आगमनं कथम्? यमदूताः प्रायः भ्रान्त्या अत्र प्रेषितवन्तः। भवान् किं पुण्यकार्यं कृतवान्?' इति।

पद्माभिः कोपेन उक्तवान्— 'एकवारं देवस्य उत्सवसमये मार्गे एका पैसा लब्धा आसीत्। तच्च भिक्षुकस्य कृते दत्तवान् आसम्। तस्य पुण्यकार्यस्य विवरणं सर्वं चित्रगुप्तस्य पुस्तके अस्ति। आवश्यकं चेत् तं पृच्छन्तु' इति।

द्वारपालकाः पद्माभिं चित्रगुप्तसमीपं नीतवन्तः। सर्ववृत्तान्तम् अपि चित्रगुप्ताय निवेदितवन्तः। चित्रगुप्तः उक्तवान्— 'पैसादानसम्बन्धिना पुण्येन एव भवान् स्वर्गस्य दर्शनं कृतवान्। इतःपरं भवतः कृते नरकः एव'। तदा पद्माभिः उक्तवान्— 'यदि मम नरके एव वसतिः, तर्हि सा पैसा भवतः समीपे किमर्थम्? तदपि मम कृते एव ददातु' इति।

चित्रगुप्तस्य हस्ततः पैसां स्वीकृत्य एव नरकं गतवान् पद्माभिः।





# सुकुमारी

विदेहराजस्य एका पुत्री आसीत् । वज्रप्रभा इति तस्याः नाम । एकदा सा उद्यानवने बहुकालपर्यन्तं क्रीडितवती । ततः सहसा 'हन्त ! नितरां श्रान्ता अस्मि' इति दीर्घं निश्वस्य अन्तःपुरं गत्वा तत्र पर्यङ्के उपविष्टवती । क्रीडासमये तया सह तिस्रः दास्यः आसन् । सम्भ्रान्ताः ताः तत्क्षणं तस्याः शुश्रूषां कृतवत्यः । ताः तस्याः सख्यः अपि आसन् ।

वज्रप्रभा हंसतूलिकातल्पे विश्रान्तिं लब्धवती । तदा सा "इदानीम् एकं प्रश्नं पृच्छामि। उद्याने मम आयासस्य कारणं किम्? भवतीषु या समीचीनम् उत्तरं ददाति, सा मम रत्नहारं प्राप्तुम् अर्हति" इति सखीः उक्तवती ।

दास्यः परस्परं दृष्टवत्यः । अनन्तरं तासु मरीचिका नाम दासी "यदि उत्तरं समीचीनं न भवति तर्हि भवती किं करोति? तदपि ज्ञातव्यं किल ?" इति पृष्टवती ।

"तदा रत्नहारस्य स्थाने कपोलद्वयस्य चपेटिकाद्वयं लभ्यते" इति वज्रप्रभा उक्तवती ।

तदा मरीचिका राजकुमारीम् उक्तवती- 'तर्हि अहं मम भाग्यपरीक्षां करोमि । 'बहुकालपर्यन्तं राजकुमारी नेत्रनिमीलनक्रीडायां निरता आसीत् । तदेव आयासस्य कारणम्। मध्याह्नस्य तीव्रे आतपे तथा धावनेन आयासः अवश्यं भवति एव। केवल भवती एव तादृशं श्रमं सोढुं शक्नोति । अन्या चेत् मूर्छामेव प्राप्नोति स्म' इति । तदा वज्रप्रभा क्रोधेन मरीचिकायाः कपोलद्वयम् अपि वेगेन ताडितवती । तत् दृष्ट्वा अन्ये दास्यौ सम्यक् हसितवत्यौ ।

श्रीमाता



अनन्तरं मरुद्वती नाम द्वितीया दासी "उद्यानसरोवरस्य जले दीर्घकालिकतरणमेव राजकुमार्याः आयासस्य कारणम्। तावत् तरणं पुरुषाणामपि दुस्साध्यम्। भवती तु बहुसमीचीनतया तरणं कृतवती। प्रथमं नेत्रनिमीलनक्रीडातः आयासः आसीत्। तदुपरि पुनः सरोवरजले तरणेन महान् श्रमः जातः" इति उक्तवती।

पुनः वज्रप्रभा क्रोधेन मरुद्वत्याः कपोलद्वयमपि ताडितवती। अनन्तरं मन्दाकिनी नाम तृतीया दासी तु 'राजकुमार्याः आयासस्य कारणं न धावनं, न वा तरणम्। अद्य राजकुमारी स्वयमेव लताभ्यः पुष्पावचयं कृतवती। तदेव आयासस्य कारणम्। सा अञ्जलिमितानि पुष्पाणि आनीय मालां कर्तुं मम हस्ते दत्तवती। तदा एव तस्याः आयासम् अहं लक्षितवती" इति उक्तवती।

मन्दाकिन्याः वचनं श्रुत्वा वज्रप्रभा सन्तोषेण शय्यातः उत्थितवती। रत्नहारं मन्दाकिन्याः कण्ठे योजितवती। मरीचिकायाः मरुद्वत्याः च अतीव आश्चर्यम् अभवत्।

किञ्चित्कालानन्तरं वज्रप्रभा निद्रामग्ना जाता। तदा मरीचिका मरुद्वती च मन्दाकिन्याः हस्तं गृहीत्वा अन्तःपुरस्य एकस्मिन् कोणे बलात्कारेण आनीय "रे मन्दाकिनि! अस्माकं राजकुमार्याः रूपरेखाविलासादयः कीदृशाः इति भवती न जानाति वा? अस्माकं राजकुमारी यद्यपि स्थूलकाया, तथापि न जडा। अपि च धृष्टा अपि, इति भवती एव कदाचित् उक्तवती। स्मरति किल?' इति पृष्टवत्यौ।

'आम्, सत्यमेव। तेन इदानीं किं जातम्?' इति मन्दाकिनी पृष्टवती।

"तादृशी राजकुमारी इदानीम् अञ्जलिप्रमाणकं पुष्पावचयं कृत्वा श्रान्ता भवति वा? सा तादृशी सुकुमारी अस्ति वा? भवती मिथ्यावादिनी अस्ति। भवती केवलं स्वार्थसाधनाय एवम् उक्तवती किल!" इति मरीचिका मरुद्वती च मन्दाकिनीं भर्त्सितवत्यौ।

तदा मन्दाकिनी किञ्चित् हसित्वा "अहं मिथ्यावादिनी न। अन्येषां मनसां दुःखं यथा न भवति तथा अस्माभिः वक्तव्यम् । साधारणतया राजकुमार्यः लावण्यवत्यः कुसुमकोमलाश्च भवन्ति। किन्तु अस्माकं राजकुमारी सम्पूर्णतया तद्भिन्ना एव । तं विषयं राजकुमारी स्वयं जानाति अपि। अत एव स्वकीयरूपस्य सूचकं वचनं यः कोऽपि वदति चेत् सा न सहते। तदर्थम् एव सा अस्मान् परीक्षितवती" इति उक्तवती ।

'एवं तर्हि अस्माकं वचनैः राजकुमारी स्थूला कर्कशा च अस्ति इत्यर्थः जायते, इति किल भवत्याः अभिप्रायः !' इति मरीचिका क्रोधेन पृष्टवती ।

"मास्तु कोपः । मम वचनं किञ्चित् शृण्वन्तु" इति उक्त्वा मन्दाकिनी पुनः उक्तवती-

"राजकुमारी तीक्ष्णे आतपे अपि उद्याने सर्वत्र धावन्ती नेत्रनिमीलनक्रीडायां मग्ना आसीत् इति उक्तम् । किञ्च सरोवरे बहुकाल-पर्यन्तं तरणं कृतवती इति उक्त्वा, एतत् सर्वं पुरुषाणामपि दुःसाध्यम् इति उक्तम् । एतानि वचनानि स्वकीयस्थूलकायत्वस्य सूचकानि इति मत्वा सा कोपेन ताडितवती । अहं तु तस्याः मनोभावं सम्यक् जानामि। अतः एव पुष्पावचयेन एव भवत्याः आयासः अभवत् इति अहम् उक्तवती । तेन तस्याः महती तृप्तिः अभवत् । अन्यमनुष्याणां इङ्गितज्ञानं नास्ति चेत् एवमेव अनर्थः भवति । बहुमानस्य स्थाने चपेटिका-प्राप्तिः। अस्तु, वयं तिस्रः अपि प्रियसख्यः किल ? एषः रत्नहारः अस्माकं सर्वासाम् अपि भवतु । अस्य भागत्रयं कुर्मः" इति ।

मन्दाकिन्याः वचनेन मरीचिकायाः मरुद्व-त्याश्च तृप्तिः सन्तोषश्च अभवत् ।

"वज्रप्रभासदृशीनां राजकुमारीणां समीपे कथं व्यवहर्तव्यम् इति भवत्याः वचनेन समीचीनं ज्ञानं प्राप्तम्। एषः रत्नहारः भवत्याः एव भवतु। तस्य विभागः मास्तु । अद्य नूतनं व्यवहारसूत्रं लब्धम् । तदेव पर्याप्तम्।" इति ते सख्यौ मन्दाकिनीम् आदरेण अभिनन्दितवत्यौ।





# दानरहस्यम्

एकस्मिन् ग्रामे विष्णुदत्तः इति एकः हरिदासः (हरिकथावाचकः) अस्ति। सः ग्रामं ग्रामं गत्वा श्रोतारः यथा आनन्दं प्राप्नुवन्ति तथा हरिकथां वदति। जनाः धनं सन्तोषेण ददति। अनेन मार्गेण विष्णुदत्तः जीवननिर्वहणं करोति।

एकदा विष्णुदत्तः एकं ग्रामं प्रति गतवान्। तत्रत्याः जनाः सन्तोषेण विष्णुदत्तेन हरिकथां वाचयितुं निश्चयं कृतवन्तः। तस्मिन् ग्रामे रामगुप्तः इति एकः धनिकः आसीत्। तस्य गृहे विशालम् अङ्गणम् आसीत्। अतः "तत्रैव कार्यक्रमं कुर्मः" इति जनाः निश्चयं कृत्वा, विष्णुदत्तेन सह रामगुप्तस्य गृहं गत्वा तस्य समीपे एवम् उक्तवन्तः "भोः! एतेन विष्णुदत्तेन हरिकथां वाचयितुं वयं सर्वे निश्चयं कृतवन्तः। सः कार्यक्रमः भवतः गृहे भवतु। कार्यक्रमानन्तरं वयं यथाशक्ति धनं दत्वा सम्मानं कुर्मः।"

यद्यपि रामगुप्तः एतादृशविषये अनासक्तः, तथापि एतेन कार्यक्रमेण अहं गौरवस्य पात्रं भवामि इति आलोच्य उक्तवान् "अस्तु नाम, बहु समीचीनम्। अत्रैव कार्यक्रमः भवतु इति सर्वे निश्चयं कृतवन्तः चेत्, अहं धन्यः। कार्यक्रमं चालयामः। अपि च विष्णुदत्तस्य वसतिरपि अत्रैव भवतु"।

रामगुप्तगृहस्य अङ्गणे मण्टपस्य निर्माणं कृत्वा वेदिकानिर्माणम् अपि कृतवन्तः। रात्रौ वेदिकायाः मध्ये देवस्य चित्रं स्थापयित्वा दीपमपि ज्वालितवन्तः। देवस्य समीपे शरावं स्थापितवन्तः। हरिकथां श्रोतुं सर्वे मण्टपे उपविष्टवन्तः। तेषु केचित् जनाः कथायाः आरम्भे एव यथाशक्ति धनं समर्पितवन्तः। अन्ये केचित् कथायाः अन्ते समर्पयितुं निश्चयं कृत-

पञ्चविंशति-वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।

वन्तः । धनिकः रामगुप्तः विष्णुदत्तस्य कृते दातुम् एकं राङ्कवं शतं रूप्यकाणि च सज्जीकृत्य प्रकोष्ठे स्थापयित्वा कथां श्रोतुम् आगतवान् ।

तस्मिन् एव ग्रामे श्यामगुप्तः इति एकः आसीत् । सः कथायाः पूर्वम् आगत्य शरावे चत्वारि रूप्यकाणि समर्पितवान् । विष्णुदत्तस्य कृते न्यूनमूल्यम् एकं राङ्कवं च दत्तवान्। यद्यपि सः श्यामगुप्तः धनिकः एव । यदि हरिकथा-कार्यक्रमः तस्य गृहे एव स्यात् तदा सः इतोऽपि अधिकधनेन सम्मानयितुं समर्थः ।

धनिकः रामगुप्तः तु समीपे एव उपविश्य सर्वं पश्यन् एव आसीत् -'सर्वे कति ददति' इति। सर्वेषाम् अपेक्षया श्यामगुप्तः एव अधिकं दत्त-वान् । एतत् दृष्ट्वा रामगुप्तस्य मनसि एकः विचारः समुत्पन्नः– मया किमर्थं शतं रूप्य-काणि अधिकमूल्य–राङ्कवं च दातव्यानि ? मयापि दश रूप्यकाणि, एकं सामान्यं वस्त्रं च दीयन्ते चेत् अलम् ।

विष्णुदत्तः तु बहु बुद्धिमान् । एतादृशान् बहून् कार्यक्रमान् सः दृष्टवान् । सः दृष्ट्या एव अन्येषां मनः ज्ञातुं समर्थः । तस्य कथा-वाचनसमये रामगुप्तः केनापि व्याजेन प्रकोष्ठं गतवान् । तत्र गत्वा पूर्वमेव सज्जीकृतानि राङ्कवं रूप्यकाणि च कपाटिकायां स्थापयित्वा अन्यत् एकं वस्त्रं दश रूप्यकाणि च पेटिकातः बहिः स्थापयित्वा पुनः आगत्य उपविष्टवान् ।



विष्णुदत्तः रामगुप्तस्य मनसि कः कः विचारः आगतः इति मुखभावेन विज्ञातवान्। सः अन्तः गत्वा किं कृतवान् इत्यपि ज्ञातवान्। अतः रामगुप्तस्य आगमनानन्तरम् एतां कथां आरब्धवान्। "कर्णः महादाता। याचकानां कृते नास्ति इति कदापि न वदति। एकस्मिन् दिने कर्णः स्नानार्थं गन्तु प्रवृत्तः। तदा 'एकः ब्राह्मणः याचितुम् आगतवान्' इति सेवकः उक्तवान्। कर्णः 'तं ब्राह्मणम् आनयतु मम समीपे' इति आज्ञापितवान्।

ब्राह्मणः यदा आगतवान् तदा कर्णः वामहस्ते सुवर्णपात्रं स्थापयित्वा तत्र स्थितेन तैलेन दक्षिणहस्तेन शरीरे लेपनं कुर्वन् आसीत्।

'महाराज! अहं दरिद्रः ब्राह्मणः। भवते यद् रोचते तद् ददातु' इति ब्राह्मणः उक्तवान्। तत्क्षणे एव महादाता कर्णः वामहस्ते स्थितं सुवर्णपात्रं तथैव ब्राह्मणस्य कृते दत्तवान्।

ब्राह्मणः सन्तोषेण तत् स्वीकृत्य "भोः! महादातः! भवान् किमर्थं वामहस्तेन दानं दत्तवान्? सर्वेऽपि दक्षिणहस्तेन एव ददति।" इति पृष्टवान्।

तदा कर्णः स्मयमानः एवम् उक्तवान् 'एषः विषयः सर्वैः ज्ञातव्यः। सङ्कल्पितं दानम् अनुक्षणमेव कर्तव्यम्। एतत् सुवर्णपात्रं भवतः कृते दातव्यम्' इति सङ्कल्पं कृतवान्। तदा एतत् पात्रं वामहस्ते आसीत्। एतत् दक्षिणहस्ते स्वीकृत्य दानसमयाभ्यन्तरे मम बुद्धिः अन्यथा अपि भवेत्। अतः वामहस्ते स्थितं पात्रं तेन एव हस्तेन दत्तवान्। एतदेव दानरहस्यम्।"

एवं कथां समाप्य प्रकृतकथां विष्णुदत्तः अनुवर्तितवान्। अनया कथया रामगुप्तस्य कपोलद्वयेऽपि चपेटिकानुभवः अभवत्। हरिकथासमाप्तेः अनन्तरं विष्णुदत्तस्य कृते पूर्वसङ्कल्पितापेक्षया अपि द्विगुणितं धनं, कनकं, राङ्कवञ्च दत्तवान्।





# यथा तथा

चन्दनपुरे भास्करः नाम तरुणः आसीत्। तस्य पत्नी अम्बिका नाम। सा पार्श्वग्रामस्थ-धनिकस्य पुत्री। पतिः पत्नी च दाम्पत्यजीवनं सानन्दं निर्वहति स्म।

भास्करस्य मित्रं मुकुन्दः। एकदा मुकुन्दः पत्न्या सह नगरतः भास्करस्य गृहम् आगतवान्। मुकुन्दस्य पत्नी गौरी। सा सुमधुरं गायति स्म। तस्याः गानं श्रुत्वा भास्करः अम्बिका च बहु-सन्तोषं अनुभूतवन्तौ। गानं श्रुत्वा श्रुत्वा एकः सप्ताहः, दिवसः इव अतीतः।

सप्ताहानन्तरं मुकुन्दः पत्न्या सह स्वगृहं गतवान्। भास्करः पत्न्या सह वार्तालापं कुर्वन् उक्तवान् "गौर्याः सुमधुरं गानं श्रुतं किल? अम्बिके! अहं चिन्तयामि, इतः परं भवती अपि सङ्गीतं किमर्थं न अभ्यस्येत्" इति। पत्युः प्रश्नेन अम्बिका आश्चर्यचकिता। सा मनसि चिन्तितवती—"सङ्गीतं, चित्रलेखनं, कवित्वं, नर्तनम् इत्यादयः कलाः बाल्ये वयसि एव अभ्यसनीयाः। प्रौढे वार्धक्ये वा वयसि कलाः अभ्यसितुं प्रायः न शक्याः। गौरी तु षष्ठे वयसि एव सङ्गीताभ्यासम् आरब्धवती। ततः आरभ्य सततं कृताभ्यासात् एव गौरी मधुरं गायति" एवं मनसि विचिन्त्य अम्बिका पतिम् उक्तवती "मम कण्ठस्वरः न मधुरः। अतः कथं गायामि?" किन्तु भास्करः पत्न्याः उत्तरेण न सन्तृप्तः। सः सभ्रूभङ्गम् उक्तवान्—"कण्ठस्वरः तु सुमधुरः एव। प्रतिदिनं किञ्चित् किञ्चित् यदि सङ्गीताभ्यासः क्रियते, विना आयासं सङ्गीते नैपुण्यम् सम्पादयितुं शक्यम्। किन्तु सर्वस्य अपि मूलं मनःप्रवृत्तिः। अतः प्रयत्नं करोतु"।

कानिचित् दिनानि गतानि। ओङ्कारशर्मा नाम चित्रकारः तं ग्रामम् आगतवान्। तत्र स्वचित्राणि प्रदर्शितवान्। सर्वाणि चित्राणि

भामहः

रमणीयानि आसन्। तानि चित्रकारस्य नैपुण्यस्य साक्षीभूतानि आसन्।

तानि चित्राणि दृष्ट्वा अम्बिका अतीव सन्तुष्टा। सा चित्राणां विषये वार्तालापं कुर्वती पतिम् उक्तवती- "कियन्ति सुन्दराणि तानि! जीवन्ति इव सन्ति। यदि प्रयत्नः क्रियते भवता अपि तादृशानि चित्राणि लेखितुं शक्यानि। अतः सुन्दरम् एकं चित्रं भवान् अपि आलिखतु।"

भास्करः आश्चर्येण उक्तवान्—किं ? मया चित्रं लेखनीयं वा ? चित्रलेखनं नाम किं कन्दुकक्रीडनं वा ?

"चित्रलेखनं सुलभम् इति न उक्तवती। यदि आग्रहेण रेखाः विन्यस्यन्ते, चित्रत्वेन परिणमन्ति एव। अभ्यासात् सर्वेष्टसिद्धिः किल। अतः भवान् अपि प्रयत्नं करोतु" इति अम्बिका सहासं उक्तवती।

एतत् श्रुत्वा गानविषये पत्न्यै आत्मना उक्तं भास्करः स्मृतवान्। उक्तवान् च—"तद्दिने मित्रस्य पत्न्याः गौर्याः गानं श्रुत्वा भवत्यै असम्भवकार्यम् उपदिष्टवान्। निःसारः सः उपदेशः इति इदानीं ज्ञातवान्। कलासु नैपुण्यं नाम न सुलभम्। बाल्यात् आरभ्य यदि अभ्यस्यते तदा नैपुण्यं सम्पादयितुं शक्यं भवेत्। तत्रापि स्वभावतः श्रद्धा अपेक्षिता।

"इदानीं किल ज्ञातं ? कलासु नैपुण्य न सुलभम् इति। इदानीं भवान् यथा चित्रम् आलेखितुं न शक्नोति तथा अहमपि गातुं न शक्नोमि" इति अम्बिका उक्तवती।

'किन्तु इतः परम् एवं कर्तुं शक्यम्। तत्तत्कलासु निपुणाः कलाविदः आमन्त्रणीयाः। ते सम्माननीयाः। तेषां कलाविषये आदरभावः प्रकटनीयः' इति भास्करः प्रत्युत्तरं दत्तवान्।

अम्बिका मनसि आनन्देन उक्तवती—'कलायाः महत्वम् अद्य मम पतिः ज्ञातवान्' इति।





# विष्णुकथा

विभीषणः यथा हितवाक्यानि उक्तवान् तथा मण्डोदरी अपि रावणं हितवाक्यानि उक्तवती- 'नाथ ! पूर्वं रामलक्ष्मणौ शूर्पणखां तिरस्कृतवन्तौ। तस्याः नासिकाच्छेदनं कृतवन्तौ। तदा सा तत् अवमानं न सोढवती। यदा सीता एकाकिनी असहाया च आसीत् तदा भवान् तां चौर्यरूपेण आनीतवान् किल ! तत् अवमाननं सीता सहेत वा ? शूर्पणखा-स्वकीय-अवमानस्य प्रतीकारार्थं सीताम् आनयतु' इति भवन्तं सूचितवती। तथैव सीता अपि स्वावमाननस्य प्रतीकारं कर्तुं न चिन्तयति किम् ? एतत् भवता चिन्तनीयम्। शूर्पणखा इव सीता अपि स्त्री किल!' इति।

तदा रावणः उक्तवान्—'आम्, मण्डोदरि! तत् सर्वं सत्यम्, अङ्गीकरोमि। परन्तु यत्किमपि भवतु, रावणः कदा अपि अन्येभ्यः भीतः न भवति। भवती रावणस्य पत्नी इति स्मरतु! मां मा भापयतु। सः रामः किं करोति? इति अहम् अपि पश्यामि' इति।

सर्वे अपि वानराः रामसमीपम् आगताः। महत् सैन्यं सिद्धम्।सुग्रीवः, नीलः, अङ्गदः, सुषेणः, जाम्बवान् इत्यादयः प्रमुखाः सैन्यस्य नायकाः भूत्वा रामं परितः स्थितवन्तः। आञ्जनेयः रामस्य मुख्यः सहायः अभवत्। रामलक्ष्मणयोः अङ्गरक्षकः अपि सः एव। एवं लङ्कानगरं प्रति आक्रमणम् आरब्धम्।



आञ्जनेयप्रभृतयः वानराः पर्वतान्, महापाषाणान्, वृक्षान् शिलाः, च सहस्रशः आनीय समुद्रे क्षिपन्ति स्म ।

लङ्कापर्यन्तं शतयोजनविस्तीर्णः सेतुः निर्मितः । समुद्रे स्थपितं सर्वं वस्तु जले यथा न मज्जेत् तथा स्थापयितुं नीलः समर्थः। तादृशं वरं सः पूर्वं प्राप्तवान् आसीत् । तस्य उपयोगः इदानीं जातः ।

तस्मिन् एव काले रावणेन बहिष्कृतः विभीषणः आकाशमार्गेण रामसमीपम् आगतवान् । रामः तस्य कृते अभयं दत्तवान् । उक्तवान् च– "भवन्तम् एव लङ्कायाः महाराजं करिष्यामि । तत्र संशयः एव मास्तु" इति। उक्तं वचनं दृढीकर्तुं रामः तदानीम् एव विभीषणस्य समुद्रजलेन अभिषेकम् अपि कृतवान् ।

रामः सेतोः उपरि प्रस्थितवान् । तस्य हस्तयोः कोदण्ड-धनुः बाणाः च आसन् । विभीषणः वानराः च तम् अनुसृतवन्तः ।

लङ्कायाः गुप्तचराः रामस्य आगमनं ज्ञातवन्तः । एते रावणं निवेदितवन्तः– "रामः वानरसैन्येन सह समुद्रं तीर्त्वा आगच्छन् अस्ति" इति । एतद्विषये रावणस्य विश्वासः न उत्पन्नः. यतः एकः सामान्यपुरुषः वानरसेनया सह आगच्छति, शतयोजनविस्तीर्णं सेतुं निर्माति, त्रिलोकवीरं रावणं विजित्य स्वपत्नीं नेतुं शक्नोति! किम् एतत् सर्वं शक्यते? एवमपि भवितुं शक्यम् ? गुप्तचराः भ्रान्त्या न वदन्ति किल !

रावणः एवं चिन्तामग्नः आसीत् । तदा तस्य मन्त्री प्रहस्तः तत्र आगतवान् । उक्तवान् च "शत्रूणां कृते अत्र आगन्तुम् एव अवकाशः न दातव्यः । मार्गे एव तान् अवरुध्य समुद्रे पातयामः इति मम अभिप्रायः" इति ।

रावणः हसन् उक्तवान्– "किमर्थं त्वरा ? अस्माकं कुम्भकर्णस्य तु इदानीं आहारः पर्याप्तः न लभ्यते ।



ते सर्वे अत्र आगत्य कुम्भकर्णस्य आहाराः भवन्ति । महावीरः कुम्भकर्णः एव अस्माकं पक्षे अस्ति । एवं सति, किमर्थं भीतिः ?" इति ।

रामः महत्याः वानरसेनायाः साहाय्येन समुद्रं निरातङ्कं तीर्त्वा लङ्कातीरं प्राप्तवान् । तत्र सर्वत्र वानरसेना व्याप्ता ।

लङ्कानगरम् उन्नतस्य पर्वतस्य शिखरे निर्मितम् आसीत् । पर्वताग्रे सौधस्य उपरिभागे स्थित्वा रावणः सर्वं पश्यति समविस्तृतं स्थलम् आक्रम्य स्थितं रामसैन्यम् ।

दूरे दृश्यमानं रावणं दृष्ट्वा अङ्गदस्य उत्साहः प्रवृद्धः । बालभावेन प्रचोदितः सः 'अहं रावणसमीपं गत्वा किञ्चित् वार्तालापं कृत्वा आगच्छामि' इति उक्तवान् । वेगेन आकाशम् उत्प्लुत्य रावणस्य सौधस्य उपरि आपतितवान् ।

'अये! रावण ! पूर्वम् एकदा वाली भवन्तं स्वलाङ्गूलेन बद्ध्वा क्षिप्तवान् आसीत् किल ? तस्य एव वालिनः पुत्रः अहम् अङ्गदः । मम पितुः विषये गौरवादरं प्रदर्शयन् मित्रवत् आचरितवान् । अतः एव वदामि- "इदानीम् अपि समयः न अतिक्रान्तः । रामेण सह वैरं त्यजतु । रामं शरणं गच्छतु । वानराः कीदृशाः इति भवतः कृते पुनः वक्तव्यं नास्ति । तावन्तः वानराः विशालं समुद्रं विना आयासं तीर्त्वा आगताः सन्ति । तेषां शक्तौ एतत् एव प्रमाणम्" इति उक्तवान् अङ्गदः ।

एतत् वचनं श्रुत्वा रावणः कुपितः । अङ्गदं प्रहर्तुं खड्गं गृहीतवान्। तदा अङ्गदः "धिगस्तु ते" इति वदन् रावणस्य मुकुटं पादप्रहारेण पातितवान् । ततः वेगेन निर्गत्य वानरसैन्यं प्राप्तवान् ।

वानरसैन्यं महता उत्साहेन लङ्कानगरम् आक्रम्य राक्षस-संहारार्थं प्रवृत्तम् । रावणः एतत् ज्ञात्वा निद्रातः कुम्भकर्णम् उत्थापितवान्। युद्धार्थं शीघ्रम् एव गन्तुम् आज्ञप्तवान् च ।



रावणं हितवाक्यानि उक्तवान् ।

रावणः क्रोधेन उक्तवान्— "शक्यते चेत् युद्धं करोतु । नो चेत् गत्वा तूष्णीं निद्रां करोतु । उपदेशस्य आवश्यकता नास्ति" इति ।

कुम्भकर्णः युद्धरङ्गं गतवान् । वानरान् गृहीत्वा खादितुम् आरब्धवान् । रामलक्ष्मणौ तेन सह अविश्रान्तं युद्धं कृतवन्तौ । रामबाणेन तस्य शरीरं सम्पूर्णं रन्ध्रमयम् अभवत्। सः मृतः। इदानीं वानराणां भीतिः अपगता ।

अनन्तरं रावणस्य ज्येष्ठपुत्रः इन्द्रजित् युद्धार्थम् आगतवान् । सः रावणस्य अपेक्षया अपि वीरः ।

इन्द्रजितः विषये रावणस्य महान् विश्वासः। सः मेघानाम् अन्तः स्थित्वा युद्धं कर्तुं शक्नोति स्म । अतः एव मेघनादः इत्यपि तस्य नाम आसीत् । इन्द्रं जित्वा इन्द्रजित् इति नाम प्राप्तवान् । मन्त्र—तन्त्रयोः अपि सः समर्थः । बहु मायावी अपि । "यः चतुर्दशवर्षपर्यन्तं ब्रह्मचर्यव्रतम् आचरति, निद्राहारं विना कठोरदीक्षाम् आचरति, तादृशः एव मां मारयितुं शक्नोतु" इति सः वरं प्राप्तवान् आसीत् ।

इन्द्रजित् रामस्य पुरतः एव मायासीतां पशुमारं मारितवान् । एतत् दृष्ट्वा रामः उच्चैः रुदितवान् । एतत् सर्वं मायाकल्पितम् इति रामाय निवेद्य लक्ष्मणः घोरं युद्धं कृतवान् । एवम् एव रावणः रामस्य मायाशिरः निर्माय

पूर्वं कुम्भकर्णः तपसा ब्रह्माणं तर्पयितुं प्रवृत्तः आसीत्। सः षण्मासान् भोजनम्, एकदिनं निद्रां च वररूपेण प्राप्तुम् इच्छति स्म । तस्य उद्देशं ज्ञात्वा सर्वे अपि भीताः । किन्तु सरस्वत्याः प्रभावतः कुम्भकर्णस्य प्रार्थनायां व्यत्यासः अभवत् । सः 'षण्मासान् निद्रां एकदिनं यथेष्टम् आहारं च अनुगृह्णातु' इति ब्रह्माणं प्रार्थितवान् । ब्रह्मा अपि तथा एव अनुगृहीतवान् ।

षण्मासतः पूर्वमेव यदि निद्रातः उत्तिष्ठति तर्हि कुम्भकर्णस्य शक्तिः न्यूना भवति । इदानीं तु रावणः षण्मासतः पूर्वम् एव युद्धार्थं तमुत्थापितवान् । अतः कुम्भकर्णः कुपितः। सः

विद्युज्जिह्वस्य हस्ते दत्तवान् । उक्तवान् च– 'एतत् शूले आरोप्य सीतायाः कृते प्रदर्शयतु' इति ।

सीता तत् दृष्ट्वा उक्तवती– 'एतेन अहं वञ्चिता न भवामि । एतादृशानि अकार्याणि दृष्ट्वा अहं चिन्तयामि, यत् रावणस्य शिरांसि शीघ्रम् एव भूमौ पतन्ति' इति ।

इन्द्रजित् मेघे विलीय रामलक्ष्मणयोः उपरि सर्पास्त्रप्रयोगं कृतवान् । रामलक्ष्मणौ सर्पजालेन बद्धौ । सद्यः एव गरुडः आगत्य सर्पाणां निर्मूलनं कृतवान् । रामलक्ष्मणयोः विमोचनं कृतवान् च ।

'येन चतुर्दश-वर्षपर्यन्तम् आत्मानं विस्मृत्य श्रद्धया सीतारामयोः सेवा कृता, तेन एव लक्ष्मणेन इन्द्रजितः मरणं भविष्यति' इति विभीषणः उक्तवान् ।

लक्ष्मणः, विभीषणः, आञ्जनेयः इत्यादयः इन्द्रजितः समीपं गतवन्तः । सः निकुम्भिलायाम् अजबलिपूर्वकं यागं करोति स्म । आञ्जनेयादयः तस्य यागं विनाशितवन्तः । तत्र एव लक्ष्मणः इन्द्रजितः संहारं कृतवान् ।

रावणस्य सर्वे अपि बान्धवाः मृताः । सः पाताललङ्काधिपतेः महिरावणस्य समीपं गतवान् । तं प्रार्थितवान् च– 'महाकाल्याः कृते रामं लक्ष्मणं च बलिं ददातु' इति ।

महिरावणः बहु मायावी । सः स्वमायया



रामलक्ष्मणौ निद्रामग्नौ कारयित्वा, तौ पाताललोकम् आनीतवान् ।

एतत् ज्ञात्वा आञ्जनेयः पाताललङ्काम् आगतवान् । द्वारपालक-मत्स्यवल्लभेन सह युद्धम् आरब्धवान् । तदा सुवर्चलादेवी तत्र आगत्य 'भवन्तौ पितापुत्रौ' इति वस्तुस्थितिम् उक्तवती । युद्धं स्थगितम् ।

ततः आञ्जनेयः सूक्ष्मशरीरेण काल्याः आलयं प्रविष्टवान् । रामलक्ष्मणौ स्कन्धे आरोप्य बहिः आगतवान् । रावणः मार्गे अवरोधं कृतवान् । रामलक्ष्मणौ तेन सह युद्धं कृतवन्तौ ।

चन्द्रसेना इत्येका रामस्य परमभक्ता आसीत् । महिरावणः तां कारागृहे स्थापितवान् आसीत् ।



सा आञ्जनेयस्य कृते महिरावणस्य जीवरहस्यम् उक्तवती। तदनुसारम् आञ्जनेयः तस्य प्राणान् नाशितवान्। महिरावणः मृतः। 'विष्णुपदं प्राप्नोतु' इति चन्द्रसेनां रामः अनुगृहीतवान्।

एवं रावणस्य मायोपायाः सर्वे अपि विफलाः। अनन्तरं रावणः यागं कर्तुम् आरब्धवान्। तदा आञ्जनेयः रामलक्ष्मणौ लङ्काम् आनीतवान्। विभीषणः रामस्य कृते रावणस्य यागस्य वार्ताम् उक्तवान्। सः यागः कृतः चेत् रावणस्य बलं वर्धते। अतः तस्य यागस्य ध्वंसः करणीयः' इति सः रामं सूचितवान्।

अङ्गदः 'अदृश्यकारी' इति विद्याप्रभावतः अदृश्यरूपेण मण्डोदरीसमीपं गतवान्। तस्याः वेणीं गृहीत्वा, ताम् आकर्षन् रावणसमीपम् आगतवान्। तेन रावणस्य यागदीक्षाभङ्गः अभवत्।

'अहं वञ्चितः' इति ज्ञात्वा रावणः हताशः। सः युद्धार्थं सिद्धः अभवत्। तदा मण्डोदरी पुनः रावणं प्रार्थितवती– 'युद्धं मास्तु, कृपया सीतां प्रत्यर्पयतु' इति।

रावणः उक्तवान्–'अशक्यम् एतत्, रावणः रावणः एव'। ततः एकवारं गर्जनं कृत्वा रथम् आरूढवान्। सः रामसमीपं गन्तुं प्रस्थितवान्।

पुरतः लक्ष्मणः आसीत्। तं दृष्ट्वा रावणः 'मम प्रियपुत्रं इन्द्रजितं एषः एव मारितवान्' इति स्मृतवान्। तस्य क्रोधः द्विगुणितः अभवत्। शूर्पणखायाः अवमानम् अपि लक्ष्मणः एव कृतवान् किल ? पूर्वं रावणस्य कृते इन्द्रः 'शक्तिः' इति एकं महास्त्रं दत्तवान् आसीत्। रावणः तत् अस्त्रं लक्ष्मणस्य उपरि प्रयुक्तवान्। लक्ष्मणः भूमौ पतितवान्।

तत्क्षणमेव आञ्जनेयः हिमालयपर्वतं गतवान्। सूर्योदयतः पूर्वम् एव सञ्जीविनीमूलिकाम् आनीतवान्। तस्याः मूलिकायाः प्रभावेण लक्ष्मणम्, अन्यवानरान् च स्वस्थान् कृतवान्। राम-रावणयोः युद्धम् आरब्धम्। तदा इन्द्रः रामस्य कृते दिव्यरथं प्रेषितवान्। मातलिः तस्य रथस्य सारथिः आसीत्।

राम-रावणयोः मध्ये घोरयुद्धम् अभवत् । रामः यावद्वारं रावणस्य शिरश्छेदनं करोति, तावद्वारं रावणस्य नूतनशिरांसि उत्पद्यन्ते । तदा विभीषणः रामम् उक्तवान्- "रावणस्य हृदये अमृतभाण्डम् अस्ति । तत् यथा भिन्नं भवति तथा प्रहारं करोतु" इति ।

रामः ब्रह्मास्त्रेण तथा कृत्वा रावणस्य शिरश्छेदनं कृतवान् । रावणः मृतः ।

लङ्कायां दुष्टानां शासनं समाप्तम्। धर्मात्मा विभीषणः राजा अभवत् ।

रावणकुम्भकर्णयोः मरणेन जयविजययोः द्वितीयं जन्म समाप्तम् ।

सीता अशोकवनतः रामस्य पुरतः आगतवती । तदा रामः ताम् उक्तवान्– "सीते, दुष्टाः सर्वे शिक्षिताः । मया कर्तव्यं कृतम् । रावणः भवतीम् आनीय लङ्कायां स्थापितवान् । एतादृशीं भवतीम् अहं कथं स्वीकरोमि ? अतः भवती यथा इच्छति तथा करोतु" इति ।

सीता तत्र स्थितान् प्रार्थितवती– 'अत्रैव एकस्य अग्निकुण्डस्य निर्माणं कुर्वन्तु' इति । अग्निकुण्डं निर्मितम् । सीता रामं नमस्कृत्य अग्निप्रवेशं कृतवती ।

ज्वाला-मध्ये अग्निदेवः प्रत्यक्षः अभवत् । सः विकसितपद्मम् इव सीतां स्वाञ्जलिमध्ये गृहीतवान् आसीत् । सः उक्तवान्- 'भोः राम ! सीता अग्निः इव परिशुद्धा अस्ति। तां स्वीकरोतु' इति ।

तस्मिन् एव समये दशरथः स्वर्गतः विमानेन तत्र आगत्य उक्तवान्– "वत्स, रामचन्द्र ! सीता परिशुद्धा इति अग्निपरीक्षया निरूपितं किल ? तया सह अयोध्यां गच्छतु । राज्यं परिपालयतु" इति ।

रामः विशाले पुष्पकविमाने उपविश्य सर्वैः सह अयोध्याम् आगतवान् ।





# प्रतीकारः

पुरा पर्शियादेशे कबरिस्थानं नाम राज्यं कश्चित् राजा परिपालयति स्म। तस्य राज्ञः मन्त्रिद्वयम् आसीत्। तयोः एकः महासचिवः, अन्यः उपसचिवः।

महासचिवस्य एका पुत्री आसीत्। सा अनुपमा सुन्दरी अपि। एकदा तां राजा दृष्ट्वा महासचिवम् आहूय उक्तवान् "सचिववर्य! अहं भवतः पुत्रीं परिणेतुम् इच्छामि। अतः विवाहार्थं शुभमुहूर्तं ज्योतिषिकं पृच्छतु"।

एतत् श्रुत्वा महासचिवः क्षणकालं स्तम्भीभूतः, तथापि स्थैर्यम् आपन्नः उक्तवान् "प्रभो! मम पुत्री विद्यावती देवभक्ता च। अतः विवाहविषये तया सह चर्चा करणीया"।

"शीघ्रं गत्वा चर्चां करोतु। स्वविषये अनुकूलकरम् अदृष्टं श्रुत्वा सा आनन्दतुन्दिला भवति। शीघ्रातिशीघ्रम् एतां वार्तां विद्यावत्याः भवतः पुत्र्याः कृते निवेदयतु" इति सगर्वं राजा उक्तवान्।

महासचिवः एतं वृत्तान्तं पुत्र्याः कृते निवेदितवान्। वृत्तान्तं श्रुत्वा सा न सन्तुष्टा, प्रत्युत अतीव जुगुप्सया उक्तवती—"तात! राज्ञा सह मम विवाहं सर्वथा न इच्छामि। तस्य अन्तःपुरस्थिताः स्त्रियः सर्वाः अपि दासीभूताः सन्ति। तथैव अहम् अपि कालं यापयितुं न इच्छामि"।

महासचिवः राज्ञः कृते पुत्र्याः अभिप्रायं निवेदितवान्। अत्यन्तं क्रुद्धः राजा उच्चैः गर्जितवान्—"बलात्कारेण वा भवतः पुत्र्या सह विवाहितः भवितुम् इच्छामि एव। राज्ञः मम अवरोधं कर्तुं कः शक्नोति?"

"इतः परं अपायः सन्निहितः एव। अतः राज्यान्तरगमनं वरम्" इति चिन्तयित्वा महामन्त्रिः पुत्र्या सह अश्वम् आरुह्य धावितुं



प्रवृत्तः । गुप्तचराणां द्वारा एतं वृत्तान्तं राजा ज्ञात्वा अङ्गरक्षकैः सह तयोः प्रहाणार्थं अश्वम् आरुह्य धावितवान् ।

एकघण्टात्मकः कालः अतीतः। राजा महासचिवं तथा तस्य पुत्रीं गृहीतवान् । राजा निष्करुणं महासचिवस्य शिरः खड्गेन छिन्नवान् । तस्य पुत्रीं च बलात्कारेण स्वनगरं प्रत्यानीतवान् ।

"अहो ! कियान् गर्वः ! महाराजेन मया सह विवाहं निराकरोति !! इदानीं को वा भवतीं रक्षति" ? इति महासचिवस्य पुत्रीं राजा कोपेन पृष्टवान् ।

"इदानीं स्वयं किमपि कर्तुं न शक्नोमि । सः परमात्मा एव मम गतिः" इति सा उक्तवती । परस्मिन् दिने एव- "तस्य राज्यस्य एकस्मिन् भागे प्रजाः राजानं विरुध्य राजधानीम् आक्रमितुं प्रस्थिताः सन्ति" इति वार्तां राजा श्रुतवान्। झटिति एव सेनया सह राजा तत् राजविरोधिकृत्यं समूलम् उत्पाटयितुं प्रस्थितवान्। महासचिवस्य पुत्री कारागृहात् पलायनं कुर्यात् इति, तस्याः रक्षणार्थम् उपसचिवं प्रस्थानसमये नियोजितवान् ।

अन्तःपुरस्य प्रकोष्ठे बद्धां महासचिवस्य पुत्रीं उपसचिवः गवाक्षद्वारा दृष्ट्वा तस्याः सौन्दर्येण आकृष्टः । अतः विश्वासार्हां दासीम् एकां तस्याः समीपे प्रेषितवान् ।

सा दासी गत्वा महासचिवस्य पुत्रीं प्रति उक्तवती– 'अस्माकं स्वामी उपसचिवः भवत्याः विषये बहु आदरवान्। पार्श्वस्थे उद्याने उपसचिवेन विहारं कृत्वा भवती पुनः अत्र एव आगन्तुं शक्नोति। एतद्विषयं राजा तु सर्वथा न जानाति' ।

एतत् श्रुत्वा महासचिवस्य पुत्री व्याकुलेन उक्तवती– 'एतस्यां दुरवस्थायाम् उद्याने विहारं कर्तुं मम मनः प्रवर्तते वा ? मम प्रत्यक्षे एव मम पिता मारितः। अहम् अपि बलात्कारेण आनीता, अत्र बद्धा अस्मि। अतः उपसचिवं प्रति वदतु 'इतः परम् एतादृशीं वार्तां मा श्रावयतु' इति।

दासी प्रतिनिवृत्य सर्वं उपसचिवस्य कृते निवेदितवती। एतत् श्रुत्वा भीतः व्याकुलितः च सः चिन्तितवान्– 'महासचिवस्य पुत्री एतं वृत्तान्तं यदि राज्ञे निवेदयति, तदा तस्याः पितुः गतिः एव मम अपि स्यात्'।

राजविरोधिकृत्य समूलम् उन्मूल्य राजा प्रत्यागत्य उपसचिवं पृष्टवान्– 'महासचिवस्य पुत्र्याः का वार्ता'? इति। उपसचिवः पूर्वम् एव मनसि चिन्तितं शीघ्रम् एव उक्तवान्– 'प्रभो! भवादृशस्य पत्नी भवितुं सा न अर्हा। भवान् इतः प्रस्थितवान्, ततः सा मम समीपे दासी-द्वारा एतां वार्तां प्रेषितवती– 'अहं भवता सह देशान्तरं गन्तुम् इच्छामि। तत्र भवान् मां परिणीय मया सह सुखेन वसतु' इति। एतत् श्रुत्वा 'शान्तं पापम्' इति असकृत् उक्त्वा दासीं च भर्त्सयित्वा प्रेषितवान्। श्रुत्वा देवः प्रमाणम्'।

'अरे दुष्टे! किं शिखाग्राहं गृहीत्वा शिरः छिन्नं करोमि? अथवा किं प्राणैः सह गर्ते निखनामि?' इति सकोपं साटोपं च राजा गर्जितवान्।

उपसचिवः किमपि वक्तुम् उद्युक्तः, किन्तु तत्रत्यः कश्चित् वृद्धः अग्रे आगत्य स्वाभिप्रायं राज्ञे निवेदितवान्- 'प्रभो! एतादृशव्यक्तेः मरुभूमिरेव योग्या। अतः विशालमरुभूमौ एतस्याः परित्यागः एव उचितः। तत्र एतस्याः मरणं



प्राणधारणं वा इति विधिः एव निर्णयं करिष्यति। एषा च मम विनम्रा सूचना'।

'मरुभूमौ एषा विसृज्यताम्' इति राजा आज्ञापितवान्। भटाः तां नीत्वा निम्नोन्नत-मरुभूमौ त्यक्त्वा प्रत्यागतवन्तः। सा बाहुद्वयम् अपि उद्धृत्य आकाशं पश्यन्ती देवं प्रार्थयितुम् एकत्र स्थितवती। तस्मिन् समये उष्ट्रान् नयमानः कश्चित् तां दृष्टवान्।

सः तां दृष्ट्वा समीपे आगत्य करुणया उक्तवान्–'अम्ब! सद्यः मम गृहम् आगच्छतु। अनन्तरं सर्वं वृत्तान्तं निवेदयतु'।

सा कृतज्ञतां समर्प्य उक्तवती– 'आर्य!



अहम् अत्र एव वासं कर्तुं इच्छामि। किन्तु भवान् कृपया पिपासानिवारणार्थं जलाशयं दर्शयतु। येन अहं बहु उपकृता भवामि'।

उष्ट्रवाहकः जलेन परिपूर्णं बृहज्जलाशयं तस्याः कृते दर्शितवान्। सा जलाशयस्य तीरे एव स्थितवती। सः उष्ट्रवाहकः समीपस्थ-राज्यस्य सेवकः आसीत्। सः सेवकः युव-राजस्य कृते महासचिवस्य पुत्र्याः विषयं निवेदितवान्।

युवराजः अनुक्षणम् एव प्रस्थाय तस्याः समीपे आगतवान्। अदृष्टपूर्वां सौन्दर्यनिधिं तादृशीं सुन्दरीं दृष्ट्वा युवराजः आश्चर्यचकितः अभवत्।

युवराजः स्वस्य परिचयं स्वयं कुर्वन् तां आमन्त्रितवान् -"भवति ! कृपया नगरम् आगत्य अस्माकम् आतिथ्यं स्वीकरोतु" इति।

सा तस्य आमन्त्रणं न स्वीकृतवती। 'मरु-भूमेः समीपे जलाशयस्य पार्श्वे एव अहं वसामि' इति दृढनिश्चयेन उक्तवती च।

युवराजः नगरं प्रत्यागत्य निद्राम् अपि अकृत्वा चिन्तितवान्– "महासचिवस्य पुत्री एकाकिनी एव मरुभूमौ वसति। तत्र कदाचित् सा अपायम् अपि प्राप्नुयात्। अबला सा कथम् अपायम् निवारयेत्" ?

अनन्तरदिने रात्रौ युवराजः तस्य सरोवरस्य समीपं गतवान्। तत्र वृक्षस्य अधः तूष्णीम् उपविष्टवान् च। प्रातःकाले महासचिवस्य पुत्री तं दृष्ट्वा आश्चर्येण उक्तवती- "युवराज ! भवान् राज्यपरिपालकः। नगरं त्यक्त्वा भवतः अत्र आगमनं न शोभते"

"भवत्या युक्तम् एव उक्तम्। किन्तु मया सह विवाहं यदि इच्छति, तर्हि प्रतिनिवृत्य गच्छामि" इति युवराजः प्रत्युत्तरं दत्तवान्। युवराजस्य वचनं श्रुत्वा अश्रुपरिपूर्णा सा गद्गद-स्वरेण उक्तवती "माम् आरक्षितुम् एव मम पिता प्राणान् त्यक्तवान्। प्रमाणभूतः मम पिता यस्य राज्ञः अनन्यभावनया सेवां कृतवान्, सः एव राजा तं स्वहस्तेन एव हतवान्। अतः प्रती-कारं विना विवाहं मनसा अपि न चिन्तयामि"

अनन्तरं च पूर्वं प्रवृत्तं सर्वं वृत्तान्तं सविस्तरं निवेदितवती ।

युवराजः शीघ्रम् एव नगरं प्रतिनिवृत्य सेनापतिम् आज्ञापितवान्– "भवान् महत्या सेनया सह कब्रिस्थानम् आक्रामतु" इति । सः सेनापतिः कब्रिस्थानम् आक्रम्य राजानम् उपसचिवं च जीवग्राहं गृहीत्वा युवराजस्य समीपे आनीतवान् ।

युवराजः कब्रिस्थानस्य राजानम् उपसचिवं च महासचिवस्य पुत्र्याः समीपे नीतवान्। "पूर्वं शिरश्छेदनतः मां यः रक्षितवान् तं वृद्धम् अपि कृपया आनाययतु" इति सा प्रार्थितवती । सैनिकाः तम् अन्विष्य सगौरवम् आनीतवन्तः ।

अनन्तर तैः सर्वैः सह युवराजः, महासचिवस्य पुत्री च नगरं प्रविष्टवन्तौ । तत्र महासचिवस्य पुत्र्याः अभिप्रायानुसारेण सभा आयोजिता । सभायां बहवः जनाः सम्मिलिताः । तस्यां सभायां सा उपसचिवं सकोपम् उक्तवती- "पूर्वं प्रवृत्तं सर्वं वृत्तान्तं यथार्थं वदतु" इति । सः उपसचिवः मरणभयेन उक्तवान्– "मम राज्ञे अहं भवत्याः विषये असत्यं निवेदितवान्। अतः एव एषः अनर्थः सम्पन्नः ।"

युवराजः सैनिकान् आज्ञापितवान्- "एतं वराकं, मरुभूमौ त्यजतु" इति । अनन्तरम् "एषः राजा निरपराधिनः एव स्वमहासचिवस्य शिरश्छेदनं कृतवान् । अतः सापराधिनः एतस्य शिरश्छेदनं अत्यन्तं समुचितम्" इति निर्णयं कृत्वा युवराजः भटैः तस्य शिरः छेदितवान् ।

तस्मै वृद्धाय युवराजः धनं लघुराज्यं च दत्तवान्। लघुराज्यस्य राजा अपि सः वृद्धः एव इति उद्घोषितवान् ।

प्रतीकारः कृतः। अतः महासचिवस्य पुत्र्याः मनः शान्तम् अभवत् । बहोः कालतः अनन्तरं स्मयमाना सा युवराजं दृष्टवती । विवाहसूचकः सः मन्दहासः आसीत् ।



# चित्रशीर्षिका-स्पर्धा पारितोषिकं ५० रूप्यकाणि ।

विजितां शीर्षिकां १९८४ जुलैमासस्य सञ्चिकायां प्रकटयिष्यामः ।





* उपरितनं चित्रद्वयं पश्यन्तु । तस्य युक्तां शीर्षिकाम् एकेन वाक्येन वा, परस्पर-सम्बन्धि-वाक्यद्वयेन वा लिखित्वा प्रेषयन्तु । मे २० दिनाङ्कतः पूर्वम् एव शीर्षिकाः प्रेषयन्तु । अनन्तरम् आगताः शीर्षिकाः न परिशीलयामः । * शीर्षिकासु अस्माभिः निर्णीतस्य अत्युत्तमस्य शीर्षिका-युगलस्य ५० रूप्यकात्मकं पारितोषिकम् । * शीर्षिकाः समपत्रे (पोस्ट् कार्ड) लेखनीयाः । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्टसङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः— चन्दमामा (संस्कृतम्) ७३/२ 'अक्षरम्' रङ्गरावमार्गः शङ्करपुरम्, बेङ्गलूरु—५६०००४

[संस्कृत-चन्दमामायाः सम्पादनसम्बन्धे अपि सम्पर्क-सङ्केतः उपरितनः एव। ग्राहकशुल्कं तु मद्रास-सङ्केतस्य कृते एव प्रेषणीयम्]

## भवन्तः जानन्ति वा? (उत्तराणि)

१. ईस्ट् इण्डिया कम्पनी प्रतिनिधिः-श्रीमान् जाब् चार्नाक् महाशयः १६९० क्रिस्ताब्दे निर्मितवान् । २. अकबरचक्रवर्ती। ३. श्रीमान् डयोडरस्। ४. बर्मादेशस्य राजा बोडापायः मणिपुरस्य तथा आस्साम राज्यस्य स्वल्पभागस्य आक्रमणं कृतवान्। ५. श्रीराजाराममोहनरायः

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# शिष्टाचारः

| | |
|---|---|
| हरिः ओम् | Hallo |
| सुप्रभातम् | Good morning. |
| नमस्ते<br>नमस्कारः<br>नमोनमः | Good afternoon/Good evening. |
| शुभरात्रिः | Good night. |
| धन्यवादः | Thank you. |
| स्वागतम् | Welcome. |
| गणना मास्तु | No mention. |
| क्षम्यताम् | Excuse/pardon me. |
| चिन्ता मास्तु | Don't worry. |
| कृपया | Please. |
| पुनः मिलामः | Let us meet again. |
| अस्तु | All right/O.K. |
| श्रीमन् | Sir. |
| मान्ये/आर्ये | Madam. |
| साधु साधु/समीचीनम् | Very good. |
| भवतः नाम किम् ? | What is your name? (male). |
| भवत्याः नाम किम् ? | What is your name? (fem). |
| मम नाम '——' | My name is '———'. |
| भवान् कस्यां कक्ष्यायां पठति ? | Which class are you in? (male). |
| भवती कस्यां कक्ष्यायां पठति ? | Which class are you in? (fem). |
| अहं '——' कक्ष्यायां पठामि । | I am in '———' |



# कठिन-शब्दानां सान्दर्भिक-अर्थाः

| | | | |
|---|---|---|---|
| भर्त्सनम् | **Scolding** | निष्कासनम् | **Removing** |
| गर्ह्यम् | **Blamable** | पिधानम् | **Locking** |
| वाचाट: | **Talkative** | तूष्णीम् | **Silent** |
| चत्वरवृषभ: | **Uncontrolled** | उत्कोच: | **Bribe** |
| लम्बमान: | **Hanging down** | खनित्रम् | **Spade** |
| आरोप्य | **Having put** | स्यूत: | **Bag** |
| पञ्जरम् | **Cage** | व्याज: | **Pretext** |
| नूनम् | **Certainly** | बधिर: | **Deaf** |
| मा भापयतु | **Don't frighten** | पङ्गु: | **Lame** |
| उत्पाटयितुम् | **To uproot** | शराव: | **Tray** |
| निखनामि | **Bury** | राङ्कव: | **Shawl** |
| विसृज्यताम् | **Leave** | प्रकोष्ठ: | **Room** |



